# अथ पाराशरोपपुराणम्

श्रीगणेशाय नमः

श्रीसाम्बसदाशिवाय नमः

सौरमण्डलमध्यस्थं साम्बं संसारभेषजम्
नीलग्रीवं विरूपाक्षं नमामि शिवमव्ययम् १
मेरुशृङ्गे समासीनं संसारोदधितारकम्
शुकः प्रणम्य सर्वज्ञं श्रीपराशरमादरात् २
पप्रच्छ परमं गुह्यं भक्त्या परमया मुदा
भवपाशेन बद्धानां भवपाशविमोचनम् ३
पराशरोऽपि भगवान् भवानीपतिवल्लभः
प्राह कारुणिकः श्रीमान् ध्यात्वा साम्बं त्रिलोचनम् ४
श्रीपराशर उवाच
पुरा पुराणमखिलं व्यासः सत्यवतीसुतः
कृत्वा शिवप्रसादेन मुनीनां भावितात्मनाम् ५
दर्शयित्वा मुनीन्द्रैस्तु सुप्रसन्नैर्महात्मभिः
पूजितो भवदत्यर्थं पुरजित्पादवल्लभः ६
अस्मिन्नवसरे श्रीमान् महाकारुणिकोत्तमः
महादेवो महादेव्या सह सन्निहितोऽभवत् ७
तं दृष्ट्वा देवदेवेशं त्रिनेत्रं चन्द्रशेखरम्
प्रणम्य मुनयः सर्वे दण्डवत्पृथिवीतले ८
प्रदक्षिणत्रयं कृत्वा प्रपूज्य परमेश्वरम्
प्रदक्षिणत्रयं कृत्वा प्रपूज्य परमेश्वरम्
तुष्टुवुर्हृष्टमनसो विस्मिता विवशाः शुक ९
मुनय ऊचुः
शिवाय सत्यविज्ञानमहानन्दस्वरूपिणे
स्वविलक्षणहीनाय स्वयंवेद्याय ते नमः १०
स्वात्मभूतमहामायाशक्तिवैभवसाक्षिणे
स्रष्ट्रे भर्त्रे च संहर्त्रे सर्वस्य जगतः सदा ११
शक्त्याकारे तु मायायाः स्वयं चिच्छक्तिरूपतः
संस्थिताय स्वतन्त्राय नमः साम्बाय शम्भवे १२
महदाद्यणुपर्यन्तमायाचित्रस्य सर्वदा

भित्तिभूताय रुद्राय नमः संसारहारिणे १३
रूद्रविष्णवादिरूपेण विभक्ताय स्वमायया
सत्वादिगुणदेहाय निर्गुणाय नमो नमः १४
वरदाभयहस्ताय त्रिनेत्राय त्रिमूर्तिभिः
हृदि ध्येयाय नित्याय नमः साम्बाय साक्षिणे १५
वेदवेदान्तसंस्थाय वेदमार्गातिवर्तिनाम्
अगम्याय सुगम्याय नमो वेदान्तवेदिनाम् १६
स्वस्वरूपातिरेकेण किञ्चिदप्यविजानताम्
आत्मयाथात्म्यनिष्ठानामात्मभूताय वै नमः १७
श्रुतिस्मृतिपुराणादिप्रमाणानां तथैव च
प्रत्यक्षादिप्रमाणानां प्रमेयाय नमो नमः १८
अप्रमेयाय शान्ताय स्वप्रकाशाय साक्षिणे
स्वस्वरूपैकनिष्ठानां मुक्तिदाय नमो नमः १९
आत्मयाथात्म्यविज्ञानविहीनानां दुरात्मनाम्
दुःखदाय नमस्तुभ्यं भक्तिगम्याय शूलिने २०
श्रीपराशर उवाच
इत्येवं मुनिभिः साक्षाच्छङ्करोऽभिष्टुतः प्रभुः
प्रसन्नः पार्वतीनाथः प्राह गम्भीरया गिरा २१
ईश्वर उवाच
मुनीन्द्रा ब्रह्मविच्छ्रेष्ठाः प्रसन्नोऽहमतीव वः
अयं सत्यवतीसूनुरत्यन्तं मम वल्लभः २२
मत्प्रसादेन विप्रेन्द्रास्तपसा च ममाज्ञया
निर्ममे च पुराणानि लोकानां हितकाम्यया २३
मत्प्रियार्थं मुनिश्रेष्ठा पुराणं सकलं तु तत्
श्रुत्वा सत्यवतीसूनोर्लोकानां हितकाम्यया २४
अन्यान्युपपुराणानि यथेष्टं यूयमास्तिकाः
कुरुध्वं संग्रहेणैव ममाज्ञा परमा कृता २५
श्रीपराशर उवाच
एवमाज्ञां महादेवः कृत्वा वेदविदां वरः
प्रसन्नः परया शक्त्या तत्रैवान्तरधीयत २६

एवमाज्ञापितास्तेन शिवेन मुनयः पुरा
श्रुत्वा सत्यवतीसूनोः पुराणं सकलं मुदा २७
अन्यान्युपपुराणानि चक्रुःसारतराणि वै
आद्यं सनत्कुमारोक्तं नारसिंहं ततः परम् २८
नान्दाख्यं शिवधर्माख्यं दौर्वासं नारदीयकम्
कापिलं मानवं चैव तथैवोशनसेरितम् २९
ब्रह्माण्डं वारुणं कालीपुराणाख्यं तथैव च
वाशिष्ठं लिङ्गसंज्ञं च साम्बं सौरं तथैव च ३०
पाराशरसमाख्यं च मारीचं भार्गवाह्वयम्
पाराशरसमाख्यं तु पुराणमिदमुत्तमम् ३१
मयैव कथितं तत्र स्थितः श्रुत्यर्थ आस्तिक
इदं पुराणमत्यर्थं पुरजित्प्रीतिकारणम् ३२
श्रोतव्यं पठितव्यं च लेखनीयं तु पुस्तके
रक्षणीयं द्विजश्रेष्ठैरन्यैरप्यादरेण तु ३३
पठतां शृण्वतां वापि वाग्देवी च विजृम्भते
इत्युपपुराणे पाराशरे प्रथमोऽध्यायः १

अथ द्वितीयोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि तव सृष्टिक्रमं द्विज
श्रद्धया शृणु वेदोक्तं ब्रह्मविज्ञानसिद्धये १
इदं सर्वं जगत्पूर्वं प्रलये परमेश्वरे
मायाभिन्ने स्वमायाख्यकारणाभिन्नरूपतः २
वर्तते वासनारूपेणैव नाभावरूपतः
कालकर्मविपाकेन वासनाबलतोऽपि च ३
मायायाः स्वक्षणीवायं महानात्मा प्रजायते
स्रष्टव्यविषयं ज्ञानं सत्वजं मुनिपुङ्गव ४
महानात्मेति विद्वद्भिः पठ्यते वेदवित्तमैः
सृष्ट्वा महान्तमात्मानं शिवोऽनुप्राविशत्स्वयम् ५
स पुनस्तत्प्रधानेन रूपेणैव द्विजोत्तम

सर्वज्ञ इति विद्वद्भिः पठ्यते मुनिपुङ्गव ६
ईक्षितेतीक्षणोपाधिप्रधानः परिकीर्तितः
स पुनश्चेक्षिता सत्त्वं गुणमात्मतयैव तु ७
मनुते सर्वसंहर्ता तमसा भवति स्वयम्
तथैवात्मतया नित्यं मनुते च तमोगुणम् ८
पालकश्च भवेन्नित्यं सत्त्वेनैव गुणेन तु
रजसा केवलेनैव सर्वस्रष्टा भवे द्विज ९
स्रष्टा ब्रह्मा हरिः प्रोक्तः पालकः सत्यवादिभिः
संहर्ता च महेशानः शिवः साधारणः परः १०
रजः सर्वत्र चोत्पत्तौ सत्त्वं सर्वत्र पालने
तमः सर्वत्र संहारे हेतुः स्यान्नात्र संशयः ११
यस्य यत्कारणं प्रोक्तं तस्य साक्षान्महेश्वरः
अधिष्ठानतया स्थित्वा सदैवोपकरोति हि १२
यस्य यत्कारणं प्रोक्तं तस्य माया जडात्मिका
परिणामितया विप्र सदैवोपकरोति हि १३
पुण्यपापे च कालश्च वासना च मुनीश्वर
सृष्टिस्थित्यन्तकार्येषु सदैवोपकरोति हि १४
त्रिमूर्तीनां च सर्गस्यानन्तरं शब्दपूर्विका
भूतसृष्टिर्यथापूर्वं मायया च प्रवर्तते १५
शब्दादिपञ्चभूतेभ्यो जायते कृतिशक्तयः
यथापूर्वं द्विजश्रेष्ठ रजसा कालकर्मतः १६
शब्दादिपञ्चभूतेभ्यः पञ्च सत्त्वगुणेन तु
जायन्ते च यथापूर्वं मुनीन्द्र ज्ञानशक्तयः १७
शब्दादिपञ्चभूतेषु विजाता ज्ञानशक्तयः
स्वकारणैकमायाख्याविद्यया कवलीकृताः १८
एकाकारत्वमापद्य कालकर्मविपाकतः
व्यष्ट्यन्तःकरणानां तु समष्टिः स्यान्न संशयः १९
शब्दादिपञ्चभूतेषु विजाताः कृतिशक्तयः
एकाकारत्वमापद्य पूर्ववत् कालकर्मतः २०
व्यष्टिप्राणस्य सर्वस्य समष्टिः स्यान्न संशयः

शब्दादिपञ्चभूतस्थाः सत्त्वजा ज्ञानशक्तयः २१
ज्ञानेन्द्रियाणां सर्वेषां भवन्ति च समष्टयः
तथा शब्दादिभूतस्थाः क्रियारूपास्तु शक्तयः २२
कर्मेन्द्रियाणां सर्वेषां भवन्ति च समष्टयः
चतुर्विधं समष्ट्यन्तःकरणं भवति द्विज २३
मनोबुद्धिरहङ्कारश्चित्तं चैतत्तथैव च
प्राणापानादिभेदेन पञ्चधा भवति द्विज २४
समष्टिप्राणसंज्ञाश्च तेषामेवाभिमानिनः
हिरण्यगर्भसूत्रात्मदिग्वास्वादित्यसंज्ञिताः २५
वरुणश्च तथा भूमिस्तथा देवस्त्रिविक्रमः
इन्द्रश्चाग्निः प्रजानाथो मृत्युश्चन्द्रो बृहस्पतिः २६
कालाग्निरुद्रो भगवान् शिवा भोगप्रदायिनी
विशिष्टा विश्वसृष्टिश्च विश्वयोनिरजा जया २७
सर्वाभिमानी भगवान् साम्बः सत्यादिलक्षणः
सर्वाभिमानिनं साम्बं संसारोदधितारकम् २८
स्वनाथं सुप्रधीगम्यं विदित्वा मुच्यते जनः
तस्य देवस्य साम्बस्य ब्रह्मणा विष्णुनापि वा २९
रूद्रेण वा स्मृतिः पूर्वैः क्रियते च निरन्तरम्
माययास्माच्छिवादेव साम्बात्सत्यादिलक्षणात् ३०
अण्डभेदाश्च जायन्ते लोकभेदास्तथैव च
भोक्तृभोग्यादिभेदाश्च देवादीनां भिदा अपि ३१
वर्णाश्रमादिभेदाश्च धर्माधर्मभिदा अपि
सुखदुःखादिभेदाश्च स्वर्गभूमिभिदा अपि ३२
सर्वकारणमीशानः साम्बः सत्यादिलक्षणः
न विष्णुर्न विरिञ्चिश्च न रुद्रो नापरःपुमान् ३३
स एव सर्ववेदान्तैः सादरं प्रतिपाद्यते
वेदानुसारस्मृतिभिः पुराणैर्भारतादिभिः ३४
श्रौतस्मार्तसमाचारैः स एवाराध्यते द्विजैः
तच्छेषत्वेन चाराध्यास्तदन्याः सकला अपि ३५
क्वचित्कदाचिद्वेदेषु तदन्याः सर्वदेवताः

ज्ञेयत्वेनैव चोच्यन्ते ध्येयत्वेन तथैव च ३६
तच्च तद्रूपतस्तेषामुच्यते न कदाचन
किन्तु साम्बस्य रुद्रस्य शिवस्यैवान्वयेन हि ३७
स्मृतयश्च पुराणानि भारतादीनि सत्तम
शिवमेव सदा साम्बं हृदि कृत्वा ब्रुवन्ति हि ३८
शिवशङ्कररुद्रेशब्रह्मेशानादिनामभिः
श्रुतिस्मृतिपुराणाद्यैरुच्यते परमं पदम् ३९
विष्णुनारायणाद्यैस्तु नामभिः सकलैरपि
श्रुतिस्मृतिपुराणाद्यैर्नोच्यते परमं पदम् ४०
रूढ्या रुद्रादिशब्दास्तु वर्तन्ते परमेश्वरे
योगवृत्त्यैव विष्णवादिशब्दाः सत्यमुदीरितम् ४१
सर्वमूर्तिष्वयं साक्षी साम्बः सत्यादिलक्षणः
लक्ष्यभूतस्थितः साक्षात् तदधीनमिदं जगत् ४२
विहाय तं महाभ्रान्त्या ब्रह्मविष्णवादिदेवताः
परतत्त्वतया वेदा वदन्तीति ब्रुवन्ति च ४३
तथा स्मृतिपुराणानि भारतप्रमुखानि च
वदन्ति मायया मर्त्याः सा माया दुस्तरा खलु ४४
महापापवतां नृणां शिवः सत्यादिलक्षणः
परतत्त्वतया साम्बः सर्वथा न विभासते ४५
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम्
परतत्त्वतया भाति शिवः साम्बः सनातनः ४६
शिवदृष्टिस्तु सर्वत्र कर्तव्या सर्वजन्तुभिः
राजदृष्टिर्यथामात्ये क्रियते सर्वजन्तुभिः ४७
राजाधिराजः सर्वेषां त्र्यम्बकस्त्रिपुरान्तकः
तस्यैवानुचराः सर्वे ब्रह्मविष्णवादयः सुराः ४८
मुक्तिहेतुपरिज्ञानं तत्प्रसादेन केवलम्
नैव विष्णवादिदेवानां प्रसादेन न संशयः ४९
विहाय साम्बमीशानं यजन्ते ये विमुक्तये
ते महातमसाक्रान्ता न तेषां परमा गतिः ५०
विहाय साम्बमीशानं यजन्ते देवतान्तरम्

ते महाघोरसंसारे पतन्ति परिमोहिताः ५१
महादेवस्य साम्बस्य शेषत्वेनैन केवलम्
देवताः सकला ध्येया सुविज्ञेया मनीषिभिः ५२
सर्वमन्यत्परित्यज्य शिव एव शिवङ्करः
ध्येय इत्याह परमा श्रुतिराथर्वणी खलु ५३
अथ किं बहुनोक्तेन शिवः साम्बः सनातनः
साक्षान्निष्ठा हि शास्त्राणां नापरः सत्यमीरितम् ५४
तदन्यत्सकलं विश्वं स हि विश्वाधिकः शिवः
स एव जगतां नाथः स हि संचारमोचकः ५५
इति सकलं कथितं मया तथैव
श्रुतिवचसा कथितं यथा तथैव
यदि विदितं भवता विमुक्तिसिद्धिः
परमतराभिमता करस्थितैव ५६

इत्युपपुराणे पाराशरे द्वितीयोऽध्यायः २

## अथ तृतीयोऽध्यायः

श्रीपराशर उवाच
अथातः संप्रवक्ष्यामि देवताधिक्यमादरात्
यस्य विज्ञानमात्रेण प्रसीदति महेश्वरः १
अचेतनेभ्यः सर्वेभ्यश्चेतना अधिका मुने
चेतनेषु मनुष्याश्च मनुष्येष्वधिका द्विजाः २
द्विजेषु ब्राह्मणास्तेषु कुलीना अधिकाः स्मृताः
तेभ्यो मनुष्यगन्धर्वा अधिका वेदवित्तम ३
तेभ्योऽपि देवगन्धर्वाः पितरश्च ततः परम्
कर्मदेवसमाख्याश्च तथा देवास्ततः परम् ४
तेभ्य इन्द्रोऽधिकस्तस्मादधिकस्तु बृहस्पतिः
बृहस्पतेरपि प्राज्ञः प्रजानाथोऽधिकस्ततः ५
प्रजापतेरपि ब्रह्मा ब्रह्मणो विष्णुरास्तिक
विष्णोरपि हरस्तस्मान्मायी साक्षान्महेश्वरः ६
ततोऽधिकतरः साक्षाच्छिवः साम्बः सनातनः

तदन्यद्विश्वमीशानः स तु विश्वाधिकः शिवः ७
यानि वेदान्तवाक्यानि तानि सर्वाणि सत्तम
विश्वाधिकपराण्येव नैव विश्वपराणि हि ८
तथा स्मृतिपुराणानि भारतादीनि चास्तिक
शास्त्रान्तराणि तर्कांश्च श्रुत्यनुग्राहकास्तथा ९
विना साक्षाच्छिवं साम्बं प्रमाणान्यखिलान्यपि
विश्वाधिकतया नान्यं प्रवदन्ति कदाचन १०
माहेश्वरपुराणानि समस्तानि महामुने
असाधारणया मूर्त्या नाम्ना साधारणेन च ११
वदन्ति परमं तत्त्वं शिवं साम्बं त्रिलोचनम्
नृत्यन्तं स्वपरानन्द प्रमोदं चन्द्रशेखरम् १२
त्रिमूर्त्तीनां हरं वापि तदंशं तस्य वैभवम्
तदंशस्यापि मानं च वदन्ति च महामुने १३
वैष्णवानि पुराणानि समस्तानि महामुने
त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदम् १४
प्रवदन्ति पुराणे द्वे ब्राह्मे चैवानया दिशा
आग्नेयं च तथा सौरं पुराणं पण्डितोत्तम १५
अष्टादशपुराणानां निष्ठा काष्ठा महेश्वरः
गुणाभिमानिनो नैव ब्रह्मविष्णुमहेश्वराः १६
वैष्णवानि पुराणानि त्रिमूर्तीनां हरेरपि
तदंशस्य तदंशस्य वैभवं च वदन्ति वै १७
योऽपकर्षो हरेर्दृष्टः शाम्भवेष्वखिलेषु च
पुराणेषु हरेः साक्षान्मूलभूतस्य सत्तम १८
वैष्णवेषु पुराणेषु योऽपकर्षस्तु दृश्यते
रुद्रस्यासौ हरस्यास्य विभूतिरेव केवलम् १९
उत्कर्षो यः पुराणेषु दृश्यते शाम्भवेषु च
रुद्रस्यासौ स्वरूपेण मुने तत्त्वात्मनापि च २०
उत्कर्षो यः पुराणेषु वैष्णवेष्वखिलेषु च
असौ तत्त्वात्मना विष्णोर्न स्वरूपेण सत्तम २१
एवं पुराणयोः साक्षाद् ब्रह्मणो दर्शिता च दिक्

पावकस्य पुराणे च तथा सौरे च सत्तम २२
आधिक्यं देवदेवस्य शिवस्य परमात्मनः
अविज्ञाय नरो विष्णुं वरिष्ठं मन्यते भ्रमात् २३
रुद्राधिक्यमविज्ञाय ब्रह्मनारायणौ पुरा
अहं ब्रह्म त्वहं चेति विभ्रान्त्या कुरुतां रणम् २४
क्रोधेन महता युक्तो ब्रह्मा सर्वजगत्पतिः
शशाप विष्णुं गर्भस्थो भव त्वमिति मोहितः २५
तद्भक्ता ब्राह्मणाः साक्षात् त्रिपुण्ड्रे भस्मगुण्ठने
भवेयुर्विमुखा नित्यं वेदसिद्धे विमुक्तिदे २६
त्रिशूले चतुरस्रे च वेणुपत्रोपमे तथा
पुण्ड्रान्तरे रता नित्यं भवेयुस्तान्त्रिका द्विजाः २७
आयुधैः शङ्खचक्राद्यैस्त्वदीयैरङ्किता द्विजाः
अग्नितप्तैर्महामोहात् भवेयुश्चांसयोर्द्वयोः २८
वेदसिद्धेन मार्गेण त्वदीयाराधने द्विजाः
त्वद्भक्ता विमुखा नित्यं भवेयुः परिमोहिताः २९
त्वदीये पञ्चरात्रे च तन्त्रे भागवते तथा
दीक्षिताश्च द्विजा नित्यं भवेयुर्निर्भया हरे ३०
श्रौतस्मार्तसदाचारे सद्यो मुक्तिकरे शुभे
त्वद्भक्ता विमुखा नित्यं भवेयुः परिमोहिताः ३१
श्रीपराशर उवाच
इति शप्तो विरिञ्चेन विष्णुर्मोहवशङ्गतः
महाक्रोधेन संयुक्तः शशाप चतुराननम् ३२
श्रीविष्णुरुवाच
शङ्करेण भवेच्छिन्नं त्वदीयं पञ्चमं शिरः
पङ्कजोद्भव केनापि कारणेनाचिरेण तु ३३
त्वद्भक्ता ब्राह्मणा लोके क्षत्रिया वैश्यसम्भवाः
शूद्राश्च सङ्करा नित्यं भवेयुश्च पितामह ३४
तन्त्रं त्वदीयं विच्छिन्नं भवेत्सर्वत्र सर्वदा
न भवेत् त्वत्प्रतिष्ठा च स्वतन्त्रा पद्मसम्भव ३५
श्रीपराशर उवाच

एवं प्रस्खलितौ मोहात्तावप्यभवतां द्विज
अविज्ञाय शिवाधिक्यमहो मोहस्य वैभवम्  ३६
आधिक्यं सर्वदेवेभ्यो मनुते शङ्करस्य यः
संसारसागरं तीर्त्वा मुक्तिपारं स गच्छति  ३७
रुद्रं विश्वाधिकं साक्षात्सर्वदा सर्वसाक्षिणम्
सर्वस्मादधिकं चैव मनुते स तु शङ्करः  ३८
सर्वस्मादधिकत्वं ये न वदन्ति पिनाकिनः
सममन्यैर्वदन्त्येनं ते महापातकैर्युताः  ३९
आधिक्यं सर्वमन्त्राणां यथा वेदस्य विद्यते
तथा रुद्रस्य देवानामाधिक्यं विद्यतेऽनघ  ४०
इति सकलश्रुतिसार आदरात्
तव कथितः कृपयैव केवलम्
शुक हृदये प्रतिभाति चेदयं
तरति जनः स्वकशोकसागरम्  ४१
इत्युपपुराणे पाराशरे तृतीयोऽध्यायः  ३

## अथ चतुर्थोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि देवतालिङ्गमादरात्
यस्य विज्ञानमात्रेण प्रसीदति महेश्वरः  १
देवता द्विविधाः प्रोक्ताः श्रौताश्रौतविभागतः
श्रौतधर्मैकनिष्ठानां श्रुतिसिद्धा हि देवताः  २
अश्रौतधर्मनिष्ठानां श्रुतिसिद्धाः न देवताः
अश्रौतधर्मनिष्ठानां अश्रौता एव देवताः  ३
श्रौतधर्मैकनिष्ठानां लिङ्गं तु श्रौतमेव हि
अश्रौतधर्मनिष्ठानामश्रौतं लिङ्गमीरितम्  ४
देवता वेदसिद्धा यास्तासां लिङ्गं तु वैदिकम्
अश्रौततन्त्रनिष्ठा यास्तासामश्रौतमेव हि  ५
श्रौतलिङ्गं तु विज्ञेयं त्रिपुण्ड्रोद्धूलनात्मकम्
अश्रौतमूर्ध्वपुण्ड्रादि नैव तिर्यक् त्रिपुण्ड्रकम्  ६

वेदसिद्धो महादेवः साक्षात्संसारमोचकः
उमार्धविग्रहः शुद्धश्चन्द्रार्धकृतशेखरः ७
लोकानामुपकाराय श्रौतलिङ्गं दधाति च
वेदसिद्धस्य विष्णोश्च श्रौतं लिङ्गं न चेतरत् ८
प्रादुर्भावविशेषाणामपि तस्य तदेव हि
ब्रह्मणो वेदसिद्धस्य श्रौतंलिङ्गं न चेतरत् ९
प्रादुर्भावविशेषाणामपि तस्य तदेव हि
देवता वेदसिद्धा यास्तासां लिङ्गं तु वैदिकम् १०
प्रादुर्भावविशेषाणामपि तासां तदेव हि
तन्त्रसिद्धो महादेवस्तन्त्रसिद्धेन वर्त्मना ११
दधाति भस्मना तिर्यक् त्रिपुण्ड्रं भक्तवत्सलः
तन्त्रसिद्धो महाविष्णुस्त्रिशूलं वोर्ध्वपुण्ड्रकम् १२
दधाति भक्तरक्षार्थं ललाटे चतुरस्रकम्
तन्त्रसिद्धो विरिञ्चिश्च वर्तुलं तन्त्रवर्त्मना १३
दधाति भक्तरक्षार्थं ललाटे करुणानिधिः
इन्द्रादिदेवतानां च वज्रपाशाङ्कुशादयः १४
लिङ्गत्वेनैव निर्दिष्टास्तन्त्रोक्तेनेव वर्त्मना
तन्त्रनिष्ठः शिवे भक्तस्तन्त्रसिद्धेन वर्त्मना १५
विपुण्ड्रं धारयेन्नित्यं ललाटे भस्मनैव तु
तन्त्रनिष्ठा तथा विष्णोर्भक्तस्तन्त्रोक्तवर्त्मना १६
त्रिशूलं चतुरस्रं वा धारयेदूर्ध्वपुण्ड्रकम्
तन्त्रनिष्ठस्तथा नित्यं भक्तः साक्षाच्चतुर्मुखे १७
ललाटे वर्तुलं भक्त्या धारयेत् तन्त्रवर्त्मना
इन्द्रादिदेवताभक्तस्तन्त्रनिष्ठस्तथा स्थितः १८
ललाटे धारयेन्नित्यं वज्रपाशाङ्कुशादिकम्
तान्त्रिकाणां च सर्वेषां भस्मनैव त्रिपुण्ड्रकम् १९
वरिष्ठं स तु लिङ्गेभ्यः सत्यमेव न संशयः
तन्त्रनिष्ठो महादेवे भक्तस्तिर्यक् त्रिपुण्ड्रकम् २०
विना पुण्ड्रान्तरं मोहाद्धारयन्नारकी भवेत्
ललाटे भस्मना तिर्यक् त्रिपुण्ड्रं यत्तु तन्मया २१

लिङ्गं माहेश्वरं प्रोक्तं वैष्णवं ब्राह्ममेव च
शैवं भागवतं ब्राह्मं यल्लिङ्गं परिकीर्तितम्  २२
वैदिकस्तल्ललाटे तु धारयेन्न कदाचन
महापापवतां नृणां वेदसिद्धे महेश्वरे  २३
त्रिपुण्ड्रोद्धूलनादौ च प्रद्वेषश्च प्रजायते
यस्य स्यात् पितरि द्वेषः शिवे वा जगतां गुरौ  २४
उत्पत्तौ तस्य साङ्कर्यमनुमेयं विपश्चिता
वेदमार्गसमं मार्गमितरं मनुते तु यः  २५
अधिकं चास्य साङ्कर्यमनुमेयं विपश्चिता
शिवरुद्रमहादेवब्रह्मेशानादिनामभिः  २६
समं विष्णवादिशब्दं यो मनुते स हि सङ्करः
यस्य स्याद्भस्मनि द्वेषस्त्रिपुण्ड्रोद्धूलनेऽपि च  २७
उत्पत्तौ तस्य साङ्कर्यमनुमेयं विपश्चिता
महादेवाधिकं विष्णुं भनुते यस्तु मानवः  २८
तस्य वंशस्य साङ्कर्यमनुमेयं विपश्चिता
पापानामपि बाहुल्याद्दधीचस्य च शापतः  २९
गौतमस्य मुनेः शापात् श्रौतं लिङ्गं न रोचते
प्रत्युत भ्रान्तिविज्ञानादश्रौते चोर्ध्वपुण्ड्रके  ३०
ब्राह्मणाः क्षत्रिया वैश्याः शूद्राः कुर्वन्ति चापरे
अनेकजन्मसिद्धानां श्रौतस्मार्तानुवर्तिनाम्  ३१
वेदोक्तेनैव मार्गेण त्रिपुण्ड्रे जायते रतिः
भस्मना वेदमन्त्रेण त्रिपुण्ड्रं चावगुण्ठनम्  ३२
यस्य सिध्येत्प्रयत्नेन ब्रह्मण्यं तस्य पुष्कलम्
वेदवेदान्तनिष्ठानां भस्मनैव त्रिपुण्ड्रकम्  ३३
सम्यक् ज्ञानप्रदं शीघ्रं सत्यमुक्तं न संशयः
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम्  ३४
महापातकसङ्घाततमसश्चण्डभास्करः
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम्  ३५
सर्वपापहरं प्रोक्तं सत्यमेव न संशयः
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम्  ३६

शिवस्य विष्णोर्देवानां ब्रह्मणस्तृप्तिकारणम्
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ३७
पार्वत्याश्च महालक्ष्म्या भारत्यास्तृप्तिकारणम्
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ३८
विना मुक्तिर्मनुष्याणां देवानां च न सिध्यति
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ३९
विना वेदान्तविज्ञानं जायते नैव कस्यचित्
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ४०
विना वेदोदिताचारः स्मार्तश्चानर्थकारणम्
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ४१
सतां मार्गतया प्राज्ञाः प्रवदन्ति महर्षयः
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ४२
वर्णधर्मतया प्राज्ञाः प्रवदन्ति महर्षयः
भस्मना वेदमन्त्रेण त्रिपुण्ड्रस्य च धारणम् ४३
आश्रमाणां च सर्वेषां धर्मत्वेनाहुरास्तिकाः
रक्षार्थं मङ्गलार्थं च प्रवदन्ति महर्षयः
बहुनात्र किमुक्तेन सर्वसिद्धिकरं परम् ४५
त्रिपुण्ड्रधारणं कुर्यात् मुक्तिमिच्छति यः पुमान्
बहुनात्र किमुक्तेन सर्वसिद्धिकरं परम् ४६
त्रिपुण्ड्रधारणं मुक्त्वा मुक्तिमिच्छति यः पुमान्
विषपानेन नित्यत्वं कुरुते ह्यात्मनो हि सः ४७
अतस्त्रिपुण्ड्रं रचयेत वैष्णवं
ब्राह्मं च शैवं मनुजः सदैव तु
विमुक्तिकामस्तु सितेन भस्मना
श्रुतिप्रसिद्धेन हि वर्त्मना मुदा ४८

इत्युपपुराणे पाराशरे चतुर्थोऽध्यायः ४

## अथ पञ्चमोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि श्रुतीनामर्थसङ्ग्रहम्

यस्य विज्ञानमात्रेण प्रसीदति महेश्वरः १
सर्वेषामेव जन्तूनां महादेवो महेश्वरः
स्रष्टा भर्ता च संहर्त्ता जगतश्चाखिलस्य च २
तत्समो नाधिकश्चास्ति चेतनः स परात्परः
स एव रुद्रविष्णवादिरूपेण बहुधा स्थितः ३
स एव सत्यविज्ञानपूर्णानन्दैकलक्षणः
अम्बिकासहितो नित्यमसाधारणया सदा ४
अम्बिकासहितो नित्यं नीलकण्ठस्त्रिलोचनः
प्रसादं कुरुते नित्यं शङ्करः सर्वदेहिनाम् ५
ब्रह्मविष्णवादिदेवानां सृष्टिस्थित्यन्तकर्त्तृता
भोगमोक्षप्रदत्वं च शिवस्यास्य प्रसादतः ६
अस्य विज्ञानमात्रेण विमुक्तिः सर्वदेहिनाम्
कर्मणा न च नोभाभ्यामिति तत्त्वविदां स्थितिः ७
ज्ञानमोक्षप्रदं साक्षाद् वेदान्तश्रवणादिना
जायन्ते परिशुद्धस्य प्रसादादस्य देहिनः ८
वेदोदितेन मार्गेण भस्मनोद्धूलनेन च
त्रिपुण्ड्रधारणेनैव ज्ञानं सम्यक् विजायते ९
यज्ञदानतपःकर्म कर्त्तव्यं सर्वचेतनैः
वेदोक्तं चित्तशुद्ध्यर्थं परया श्रद्धया सह १०
वर्णाश्रमसदाचारः श्रौतः स्मार्तश्च सत्तमैः
सर्वथा न परित्याज्यः कर्त्तव्यः श्रेयसे सदा ११
मनुष्याणां च सर्वेषां जम्बूद्वीपनिवासिनः
वरिष्ठास्तेषु सर्वेषु वरिष्ठा आन्तरालजाः १२
आन्तरालोद्भवेभ्यसतु वरिष्ठाः प्रतिलोमजाः
तथा तेभ्यश्च सर्वेभ्यो वरिष्ठा अनुलोमजाः १२
सङ्करप्रभवेभ्यश्च वरिष्ठा वर्णसम्भवाः
तेषु वैश्यो वरः शूद्राद्वैश्याद्राजा वरः स्मृतः १३
राज्ञो विप्रो वरो विप्राद्वरिष्ठो नास्ति कश्चन
विप्रः समस्तमर्त्यानां देवता हि न संशयः १४
विप्रादपि च भूदेवाद्वरिष्ठा देवताः स्मृताः

देवताभ्यः समस्ताभ्यः स्रष्टा ब्रह्मा वरः स्मृतः १५
ब्रह्मणश्च महाविष्णुर्वरिष्ठः सर्वपालकः
विष्णोरपि वरः साक्षाद्रुद्रः संहारकारणम् १६
सर्वेषामपि देवानां वरिष्ठः परमेश्वरः
वरिष्ठयोर्हि सम्बन्धो युज्यते हि परस्परम् १७
ततो विप्रस्य सम्बन्धः शिवेनैव हि युज्यते
शङ्कराः सर्वदेवाश्च वृषलस्तु पुरन्दरः १८
पितामहस्तु वैश्यश्च क्षत्रियः परमो हरिः
ब्राह्मणो भगवान् रुद्रः सर्वेषामुत्तमोत्तमः १९
ब्रह्मभूतस्य रुद्रस्य ब्राह्मण्यं नैव हेतुजम्
ब्राह्मणो वै सदा लोके ब्राह्मणं तूपधावति २०
नेतरं क्षत्रियं वैश्यं शूद्रं चापि न संशयः
तस्मात् वैधेन मार्गेण विज्ञातो ब्राह्मणः सदा २१
महाब्राह्मणमीशानमुपगच्छेन्न चेतरान्
सर्वात्मभूतमात्मानं विरूपाक्षं द्विजोत्तमम् २२
यस्तु नोपैति साङ्कर्यं तस्यास्त्येव न संशयः
ब्राह्मणेनादिभूतेन शिवेन परमात्मना २३
आदरेण धृतं भस्म त्रिपुण्ड्रोद्धूलनात्मना
ब्राह्मणो विधिनोत्पन्नं त्रिपुण्ड्रम्भस्मनैव तु २४
ललाटे धारयेन्नित्यं तिर्यक् भस्मावगुण्ठनम्
ब्राह्मणानामयं धर्मो यत्त्रिपुण्ड्रस्य धारणम् २५
मन्त्रध्यानादिसंयुक्तं नैव वर्णान्तरस्य तु
आदि ब्राह्मणभूतेन त्रिपुण्ड्रं भस्मना धृतम् २६
यतोऽत्र एव विप्रस्तु त्रिपुण्ड्रं धारयेत् सदा
श्रौतस्मार्तसदाचारैर्ब्राह्मणः परमेश्वरम् २७
महाब्राह्मणमीशानमुपगच्छेत्सदैव तु
तच्छेषत्वेन विष्णवादिदेवानप्यास्तिकोत्तम २८
उपगच्छेत्सदा विप्रो न प्रधानतया सदा
आदिब्राह्मणभूतस्य धर्मं तिर्यक् त्रिपुण्ड्रकम् २९
ब्राह्मणो धारयेन्नित्यं मुक्तिभुक्तिफलप्रदम्

महादेवस्य सम्बन्धात्तद्धर्मैरस्ति सङ्गतिः ३०
ततस्त्रिपुण्ड्रधर्मं च ब्राह्मणो नित्यमाचरेत् ३१
इत्युपपुराणे पाराशरे पञ्चमोऽध्यायः ५

अथ षष्ठोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि शुक ते गुह्यमुत्तमम्
ब्राह्मणानां विशेषेण ज्ञातव्यमिदमुत्तमम् १
प्रत्यक्षवेदसिद्धोऽर्थः सङ्ग्राह्यः सर्वचेतनैः
अप्रत्यक्षं श्रुतेरर्थं स्मरन्ति मुनिसत्तमाः २
क्वचित्कदाचित्तत्त्वार्थं कटाक्षेण मुनीश्वराः
अधिकारिविशेषाणां प्रवदन्त्यर्थमास्तिकाः ३
शिवागमानुसारेण प्रवदन्ति क्वचित्क्वचित्
विष्णवागमानुसारेण ब्राह्मतन्त्रानुसारतः ४
जन्मना लब्धजातीनां सर्वेषामास्तिकोत्तम
आश्रमाणां च सर्वेषां धर्ममाह परा श्रुतिः ५
स्मृतयश्च पुराणानि भारतप्रमुखान्यपि
क्वचित्कदाचिद्भ्रष्टानां वेदधर्मान् ब्रुवन्ति च ६
जन्मना लब्धजातीनामाश्रमाणां तथैव च
प्राधान्येन महादेवः पूज्यो नान्योऽस्ति सिद्धये ७
तत्प्राप्त्यर्थं महाविष्णुः सर्वैः पूज्यः सनातनः
पितामहोऽपि सर्वात्मा तदर्थं पूज्य एव हि ८
देवता उत्तमाः सर्वा मध्यमा अधमा अपि
तदर्थं पूजनीयाश्च सर्वजात्याश्रमैरपि ९
वेदसिद्धेषु धर्मेषु त्रिपुण्ड्रं भस्मगुण्ठनम्
रुद्रलिङ्गार्चनं चैव मुख्यमाहुर्द्विजास्तिकाः १०
वर्णाश्रमपरिभ्रष्टः प्रायश्चित्तेष्वनुन्मुखः
वेदे तथागमे स्थित्वा तदुक्तं धर्ममाचरेत् ११
सर्वागमेषु निष्ठानां त्रिपुण्ड्रं भस्मगुण्ठनम्
वरिष्ठं सर्वलिङ्गेभ्य इति सत्यं मयोदितम् १२

नराणामुद्धृता जातिर्येषां तन्त्रोक्तवर्त्मना
ललाटे तैः सदा धार्यं भक्त्या लिङ्गातरं द्विज १३
जन्मना लब्धजातिस्तु वेदपन्थानमाश्रितः
लिङ्गान्तरं भ्रमाद्वापि ललाटे नैव धारयेत् १४
तिर्यक् त्रिपुण्ड्रं सन्त्यज्य श्रौतपुण्ड्रान्तरं भ्रमात्
ललाटे धारयेन्मर्त्यः पतत्येव न संशयः १५
भस्म श्रेयोऽर्थिभिः सर्वैर्जन्मना लब्धजातिभिः
धार्यं त्रिपुण्ड्ररूपेण भस्मना चावगुण्ठनम् १६
रुद्राक्षधारणं कार्यं सर्वैः श्रेयोऽर्थिभिर्नृभिः
कर्णपाशे शिखायां च कण्ठे हस्तेषु चादरात् १७
महादेवश्च विष्णुश्च ब्रह्मा तेषां विभूतयः
देवाश्चान्ये तथा भक्त्या खलु रुद्राक्षधारिणः १८
पापिष्ठानां च सर्वेषां खलु रुद्राक्षधारणे
श्रद्धा न जायते साक्षाद् वेदसिद्धे विमुक्तिदे १९
गोत्रर्षयश्च सर्वेषां कूटस्थाः शुक लक्षिताः
वेदोक्तवर्त्मना नित्यं खलु रुद्राक्षधारिणः २०
तेषां वंशप्रसूताश्च मुनयः सकला अपि
श्रौतधर्मं पराः शुद्धाः खलु रुद्राक्षधारिणः २१
बहूनां जन्मनामन्ते महादेवप्रसादतः
रुद्राक्षधारणे श्रद्धा स्वभावेनैव जायते २२
वेदवेदान्तविज्ञाने वेदोक्ते चैव कर्मणि
वेदानुसारिशास्त्रोक्ते श्रद्धा पुण्येन जायते २३
वेदमार्गेतरे मार्गे स्वतन्त्रे पापकर्मणाम्
नराणां जायते वाञ्छा स्वभावेनैव सत्तम २४
वेदवादेतरासक्ता बहवो मुनिसत्तम
आज्ञया देवदेवस्य शिवस्य नरकं गताः २५
वेदोदितसमाचारनिरता बहवो जनाः
प्रसादादेव रुद्रस्य विमुक्ता भवबन्धनात् २६
यथा माता स्वपुत्राणां केवलं कृपयैव तु
रक्षिता तद्वदेवेयं श्रुतिः सर्वजनस्य तु २७

यथा शत्रुजनः साक्षाद् बाधकः सर्वदेहिनाम्
तथा वेदेतरो मार्गो वैदिकस्य तु बाधकः २८
तन्त्राणि तन्त्रनिष्ठानां रक्षकाण्यपि च क्रमात्
बाधकानि विशेषेण वेदमार्गैकवर्तिनाम् २९
अतः श्रुत्युदितं धर्मं गृह्णीयादेव वैदिकः
तन्त्रसिद्धं न गृह्णीयान्मोहाद्वापि कदाचन ३०
यत्तु तन्त्रानुरोधेन कथितं तत्परित्यजेत्
धर्मशास्त्रे पुराणे च यत्नतो वैदिको जनः ३१
इत्युपपुराणे पाराशरे षष्ठोऽध्यायः ६

अथ सप्तमोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि ब्राह्मणस्य तु वैभवम्
यस्य विज्ञानमात्रेण प्रसीदति महेश्वरः १
ब्राह्मणस्त्रिविधः प्रोक्तो जन्मना वेदवर्त्मना
ब्रह्मविद्याबलेनापि यो यः पश्चात्स उत्तमः २
ब्राह्मण्यां ब्राह्मणेनैव वेदोक्तेनैव वर्त्मना
जायते यः स विज्ञेयो ब्राह्मणः प्रथमोदितः ३
जन्मान्तरसहस्रेषु कृतपुण्यवशेन तु
ब्राह्मणो जायते लोके वेदघोषसमन्विते ४
देवतानां प्रसादेन मानुष्यं लभते जनः
इन्द्रस्यैव प्रसादेन बृषलो जायते भुवि ५
विरिञ्चस्य प्रसादेन कुले वैश्यस्य जायते
विष्णोश्चैव प्रसादेन कुले राज्ञो विजायते ६
महादेवप्रसादेन ब्राह्मणो जायते भुवि
ज्ञाननिष्ठो भवेद्विप्रो महादेवप्रसादतः ७
रक्षकश्च भवेद् राजा महादेवप्रसादतः
वाणिज्यकृषको वैश्यो भवेद्रुद्रप्रसादतः ८
शूद्रः शुश्रूषुरेव स्यात्प्रसादेन विजानताम्
प्रसादेन हि रुद्रस्य ब्राह्मणो ब्राह्मणो भवेत् ९

यथा देवो महादेवो देवानामुत्तमोत्तमः
तथा विप्रो मनुष्याणां सर्वेषामुत्तमोत्तमः १०
तपसा ब्राह्मणस्यैव जगदेतत् स्थितं भवेत्
नेतरस्यैव विप्रेन्द्र मया सत्यमुदीरितम् ११
अभिषिक्तो महाराज्ये ब्राह्मणस्यैव रक्षकः
विशेषेण भवेन्नित्यं वेदमार्गस्य चादरात् १२
ब्राह्मणं मोहतो वापि यः कुर्यादवगूरणम्
स स्वर्णेन शतेनैव दण्ड्यो राज्ञाविचारतः १३
ब्राह्मणं मोहतो वापि प्रहरेद्यः स्वहस्ततः
स दण्ड्यश्चाविचारेण क्षत्रियेण सुवर्णतः १४
ब्राह्मणस्याकरोद्देहे लौहित्यं यस्तु मानवः
सोऽयुतेन सुवर्णेन दण्ड्यो राज्ञाविचारतः १५
अस्त्रशस्त्रादिभिर्देहे ब्राह्मणस्याकरोत्क्षतिम्
यस्तस्य करविच्छेदं कुर्याद् राजाविचारतः १६
न दाहयेद् द्विजश्रेष्ठं न दहेच्चक्रपूर्वकैः
अङ्कितो यः स्वदेशात्तं राजा शीघ्रं प्रवासयेत् १७
अतीव पतितानां हि स्वपदाद्यङ्कनं नृणाम्
विधीयते न शुद्धानामतः शुद्धं न चाङ्कयेत् १८
वेदसम्बन्धतो यस्तु ब्राह्मणः परिकीर्तितः
नावमानं सदा कुर्यात्तस्य भ्रान्त्यापि मानवः १९
अधीतवेदं मोहेन यः कुर्यादवगूरणम्
क्षत्रियं च तथा वैश्यं सोऽपि दण्ड्यस्तु पूर्ववत् २०
राजन्यवैश्यगोहिंसामकरोद्यस्तु मानवः
अधीतवेदो यो राज्ञा सोऽपि दण्ड्यस्तु पूर्ववत् २१
यस्तु साक्षात्परंब्रह्म विद्यया ब्राह्मणोत्तमः
तस्यापि नावमानं तु प्रकुर्यान्मोहतोऽपि वा २२
तथा न लोहितं कुर्यान्मोहतो वापि मानवः
राजन्यवैश्ययोः कुर्याद्यदि दण्ड्यः स पूर्ववत् २३
ब्रह्मनिष्ठं द्विजश्रेष्ठं वाचा निन्दन्ति ये नराः
हन्यात्तानविचारेण राजा राष्ट्रविवृद्धद्धये २४

ब्राह्मणो यः सितेनैव भस्मना चावगुण्ठितः
त्रिपुण्ड्रावलिभिर्दीप्तस्तं राजा परिरक्षयेत् २५
भस्मसंच्छन्नसर्वाङ्गं त्रिपुण्ड्राङ्कितमस्तकम्
ये निन्दन्ति द्विजं राजा हन्यात्तानविचारतः २६
अध्यापने चाध्ययने श्रौतस्मार्तेषु कर्मसु
सम्भाषणे च सम्बन्धे नाधिकारी च लाञ्छितः २७
यज्ञोपवीतं दण्डं च सोदकं च कमण्डलुम्
लाञ्छनं ब्राह्मणस्याहुर्मुनयः सूक्ष्मदर्शिनः २८
वैणवीं धारयेद्यष्टिं सोदकं च कमण्डलुम्
पवित्रमुपवीतं च त्रिपुण्ड्रोद्धूलनं द्विजः २९
एतादृशानि लिङ्गानि यस्य सन्ति द्विजन्मनः
सत्यमेव मया प्रोक्तं सफलं तस्य जीवितम् ३०
ऊर्ध्वपुण्ड्रं त्रिशूलं च वर्तुलं चतुरस्रकम्
अर्धचन्द्रादिकं लिङ्गं वेदनिष्ठो न धारयेत् ३१
ब्राह्मणस्य शरीरे तु वर्तन्ते सर्वदेवताः
नावमानमतः कुर्यात्पूजयेत्तं विशेषतः ३२
महादेवस्य तुल्यं तु विद्यते यदि दैवतम्
ब्राह्मणस्यापि तुल्यस्तु विद्यते न हि संशयः ३३
विप्रपादाम्बुजस्पर्शात् शुद्धा भूमिरियं भवेत्
तस्य दृष्टिं गताः सर्वे मुच्यन्ते सर्वकिल्बिषात् ३४
यथा मातरमाश्रित्य विवर्धन्ते प्रजा इमाः
तथा ब्राह्मणमाश्रित्य जगदेतद्विवर्धते ३५
बहुनोक्तेन किं साक्षात् ब्राह्मणः परदेवता
अवमानं सदा तस्य न कुर्यान्मोहितोऽपि वा ३६
इत्युपपुराणे पाराशरे सप्तमोऽध्यायः ७

अथ अष्टमोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि श्रद्धानस्य तेऽनघ
सर्ववेदरहस्यार्थं संसारोच्छेदकारणम् १

ज्ञानं कर्म च वेदान्तैर्वेदैश्च प्रतिपाद्यते
तात्पर्येण तयोर्ज्ञानं प्रधानं न हि संशयः २
तत्र ज्ञानं द्विधा विप्र वेदितव्यं विचक्षणैः
एकं साक्षात्परं तत्त्वं जन्यमन्यत्तु कारणम् ३
विज्ञानपरतत्त्वाख्यं वेदान्तैः प्रतिपाद्यते
कारणोत्पन्नविज्ञानं तदर्थं प्रतिपाद्यते ४
करणोत्पन्नविज्ञानं द्विधा लोके व्यवस्थितम्
एकं तत्त्वावेदकं तु ज्ञानमन्यन्मृषार्थकम् ५
तत्त्वावेदकविज्ञानं ब्रह्मज्ञानं समाह्वयम्
वेदावसानवाक्येन केवलेनैव जायते ६
येन सम्पादिता शान्तिर्महती नैव पण्डित
न तस्य ब्रह्मविज्ञानं जायते जन्मकोटिभिः ७
येन सम्पादिता शान्तिर्महती पण्डितोत्तम
तस्यैव ब्रह्मविज्ञानं जायते नहि संशयः ८
येन सम्पादिता नैव प्रव्रज्या पण्डितोत्तम
न तस्य ब्रह्मविज्ञानं जायते जन्मकोटिभिः ९
येन सम्पादिता विप्र प्रव्रज्या महती परा
तस्यैव ब्रह्मविज्ञानं जायते नहि संशयः १०
येन सम्पादिता नैव शुकैकाग्रमतिस्थिरा
न तस्य ब्रह्मविज्ञानं जायते जन्मकोटिभिः ११
येन सम्पादिता पुंसा शुकैकाग्रमतिस्थिरा
तस्यैव ब्रह्मविज्ञानं जायते नेतरस्य तु १२
उद्धूलनं त्रिपुण्ड्रं च येन नाचरितं मुदा
न तस्य ब्रह्मविज्ञानं जायते जन्मकोटिभिः १३
उद्धूलनं त्रिपुण्ड्रं च येनेवाचरितं मुदा
तस्यैव ब्रह्मविज्ञानं जायते ह्यचिरेण तु १४
तस्मान्मुमुक्षुः सततं शान्तिदान्त्यादिभिः सह
उद्धूलनं त्रिपुण्ड्रं च श्रौतनित्यं समाचरेत् १५
सर्ववेदान्तसंसिद्धसाधनैः सहितस्य तु
जायते शुक विज्ञानं तेन मुक्तिर्न कर्मणा १६

मृषार्थविषयं ज्ञानमतत्त्वावेदकाभिधम्
व्यवहारदशायां तु तन्मिध्याज्ञानमुच्यते १७
सत्यत्वेन महादेवो मायया यः प्रकल्पितः
तदर्थविषयज्ञानं सम्यक् ज्ञानमितीर्यते १८
यत्तु कल्पितसत्यार्थविषयं ज्ञानमास्तिक
तत्तु संसारभोगाय शिवेनैव विनिर्मितम् १९
नित्यकर्माणि सर्वाणि पारम्पर्यक्रमेण तु
मुक्तिहेतुपरिज्ञाने पर्यवस्यन्ति सुव्रत २०
वर्णाश्रमवयोऽवस्थाविशेषाध्यासवान्नरः
अधिकारी भवेन्नित्यं सर्वशास्त्रेषु सत्तमः २१
वर्णाश्रमवयोऽवस्थाविशेषरहितात्मवित्
वर्तमानः श्रुतेर्मूर्ध्नि न भवेद्वेदकिङ्करः २२
अतः परमविज्ञानं साधयेदप्रमादतः
ज्ञानार्थं नित्यकर्माणि प्रकुर्याद् ब्राह्मणोत्तमः २३
वेदादन्यत्र विज्ञानं नास्ति नास्ति क्रिया शुभा
अतः परमकल्याणं वेदमेकं समाश्रयेत् २४
वेदमूलानि शास्त्राणि मन्वादीनि महान्ति च
पुराणादीनि सर्वाणि सादरं नित्यमाश्रयेत् २५
वेदमूलतया तानि प्रवृत्तान्यपि सत्तम
ब्रुवन्ति वेदा ब्रह्मार्थं कदाचिच्च क्वचित्क्वचित् २६
भाति प्रत्यक्षवेदेन यद् विरुद्धतया शुक
वैदिकैस्तत्परित्याज्यं नैव ग्राह्यं कदाचन २७
अक्षपादप्रणीते च काणादे सांख्ययोगयोः
त्याज्यः श्रुतिविरुद्धांशः श्रुत्येकशरणैर्नृभिः २८
पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम्
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन २९
जैमिनीये च वैयासे विरुद्धांशो न कश्चन
श्रुत्वा वेदार्थविज्ञाने शुक पारङ्गतौ हि तौ ३०
बौद्धमर्होदितं शास्त्रं लोकायतिकसंज्ञितम्
पाषण्डमपरं शास्त्रं वैदिकस्तु परित्यजेत् ३१

इत्युपपुराणे पाराशरे अष्टमोऽध्यायः ८

## अथ नवमोऽध्यायः

श्रीपराशर उवाच
वक्ष्ये वेदविदां श्रेष्ठ शृणु सर्वं जगद्धितम्
ब्राह्मे मुहूर्ते चोत्थाय शिवं साम्बं त्रिलोचनम् १
ध्यात्वा समाहितो भूत्वा धर्ममर्थं च चिन्तयेत्
कालेनैव च विण्मूत्रं त्यक्त्वा प्रक्षाल्य वारिणा २
गन्धलेपनिवृत्यन्तं मनःशुद्ध्यन्तमेव तु
मुखप्रक्षालनं कृत्वा गण्डूषं चाम्भसः पुनः ३
सकृदाचमनं कृत्वा प्राङ्मुखोदङ्मुखोऽपि वा
स्वदन्तशोधनं कृत्वा काष्ठेनैव यथाविधि ४
दन्तशुद्धिं प्रकुर्वाणः श्रियमाप्नोति पुष्कलाम्
मध्यमाङ्गुलिना तुल्यं स्थौल्येन ब्रह्मवित्तम ५
दन्तकाष्ठं प्रगृह्णीयाद्दैर्घ्येण द्वादशाङ्गुलम्
गृह्णीयात् सत्वचं सौम्यं क्षीरवृक्षसमुद्भवम् ६
मालतीसम्भवं वापि करवीरमथापि वा
अपामार्गं तु वा बिल्वं शुष्कं सर्वं विवर्जयेत् ७
जिह्वाशुद्धिं पुनः कुर्यान्मन्द काष्ठान्तरेण च
भुक्त्वा तु दन्तकाष्ठं च निखनेत् तत्स्थले शुभे ८
नोचेदश्रियमाप्नोति नात्र कार्या विचारणा
गण्डूषं दशकृत्वस्तु प्रकुर्यादास्यशुद्धये ९
आस्यशुद्ध्या तु वाग्देवी वाचि तस्य प्रकाशते
आचम्य प्रयतो भूत्वा स्नानं कुर्यान्न चान्यथा १०
स्नानमाचमनोपेतं न स्नानमितरत्सदा
स्नानभोजनवेलायां सन्ध्ययोरुभयोरपि ११
आचान्तः पुनराचामेदन्यत्र तु सकृत्सकृत्
महानदीषु शुद्धासु तडागे वा यथाविधि १२
स्नायात्पापविशुद्ध्यर्थं भस्मना वा शिवेन तु
अग्निरित्यादिभिः मन्त्रैर्जाबालोक्तैश्च सप्तभिः १३

त्रिपुण्ड्रधारणं चापि तिर्यक्कुर्याल्ललाटके
जलस्नाने त्वशक्यश्चेद् मार्जयेदार्द्रवाससा १४
उत्तमाङ्गादिपादान्तं शुद्धेन मनसा सह
गवांघ्रिरजसा वापि स्नानं कुर्याद्विशुद्धये १५
सातपेनैव वर्षेण स्नायाद् वा मतिमत्तमः
आत्मविज्ञानतोयेन स्नात्वा मुच्येत बन्धनात् १६
अवगाहनरूपं तु स्नानं तद्वारुणं स्मृतम्
ब्राह्मं तु मार्जनं प्रोक्तमाग्नेयं भस्मना कृतम् १७
गवांघ्रिरजसा स्नानं वायव्यं सर्वदोषहृत्
सातपेनैव वर्षेण स्नानं दिव्यमुदाहृतम् १८
आत्मविज्ञानतोयेन स्नानं मानसमुत्तमम्
मानसेन समं स्नानं नास्ति नास्ति न संशयः १९
मानसेन विना नास्ति स्नानेन ब्रह्मवित्तम
नृणामात्यन्तिकी शुद्धिस्ततस्तत् स्नानमाचरेत् २०
स्नात्वा तु तर्पयेद् देवान् ऋषीन् पितृगणानपि
स्वसूत्रोक्तेन मार्गेण पुनराचम्य वाक् यतः २१
मन्त्रैः सम्प्रोक्ष्य चात्मानमापोहिष्ठादिभिस्त्रिभिः
शुद्धैः कुशोदकैश्चापि तोयमादाय तत्परम् २२
सूर्यश्चेत्यादिमन्त्रेण मनसा चाभिमन्त्र्य च
पीत्वा तत्पुनराचम्य दधिक्रेत्यादिना तथा २३
आपोहिष्ठादिभिश्चापि स्वात्मानं प्रोक्षयेद् द्विजः
पुनः प्रदक्षिणीकृत्य स्वात्मानं शुद्धवारिणा २४
अपामञ्जलिमादाय जपित्वा तु समाहितः
ॐकारं व्याहृतिं चैव गायत्रीं मन्त्रमातरम् २५
आदित्याय पुनर्दद्याज्जलं तदभिमन्त्रितम्
त्रिःप्रदद्याज्जलं तस्य कुर्याच्चैव प्रदक्षिणम् २६
नदीतीरेऽथवा शुद्धे देशे दर्भादिसंयुते
समासीनो यथाशास्त्रं प्राणायामत्रयं द्विजः २७
कृत्वा सन्ध्यामभिध्यायेन्नीलग्रीवां सुशोभनाम्
वरदाभयहस्तां तां त्रिनेत्रां चन्द्रशेखराम् २८

प्रणवं परमात्मानं जपित्वा भक्तिसंयुतः
स्वात्मानं तामभिध्यायन् प्रकुर्याद् बन्धनं बुधः २९
सन्ध्यावन्दनहीनस्तु सर्वदाऽशुचिरेव हि
श्रौतस्मार्तसमाचारे नाधिकारी विशेषतः ३०
ब्राह्मणाः क्षत्रिया वैश्या बहवः पण्डितोत्तम
सन्ध्यावन्दनमाश्रित्य विमुक्ताः कर्मबन्धनात् ३१
सन्ध्यावन्दनहीनानां नरकप्राप्तिरेव हि
तस्मात् सर्वप्रयत्नेन सन्ध्यावन्दनमाचरेत् ३२
प्राङ्मुखः प्रातरुत्थाय ध्यायंस्तां मन्त्रमातरम्
सर्वलक्षणसम्पन्नामचिरादेव मुक्तिदाम् ३३
अष्टोत्तरसहस्रं वा शतमष्टोत्तरं तु वा
अष्टाविंशतिकं वापि सावित्रीमादराज्जपेत् ३४
अर्धोदयन्तमादित्यमुपतिष्ठेद् द्विजोत्तमः
स्वसूत्रोक्तेन मन्त्रेण प्राणायामपुरःसरम् ३५
सूक्तैः श्रौतैस्तथा स्मार्तैः स्तोत्रैर्नानाविधैरपि
सहस्रकिरणं देवमुपस्थाय कृताञ्जलिः ३६
प्रणतिं शिरसा भूमौ कुर्वीत श्रद्धया सह
ॐ स्वस्वोल्काल्काय शान्तायेत्यादिमन्त्रेण मन्त्रवित् ३७
स पवित्रस्तु शुद्धात्मा शुक्लवस्त्रोत्तरीयकः
कुर्वीत समिदादानं स्वसूत्रेणैव पावके ३८
समिदादानहीनस्तु सप्ताहात् पतितो भवेत्
अतश्च समिदादानं कुर्यान्नित्यमतन्द्रितः ३९
समिदादानसिद्धेन भस्मना सजलेन वा
त्रिपुण्ड्रं धारणं कुर्यान्मेधावीत्यादि मन्त्रतः ४०
पत्रपुष्पादिभिर्नित्यं भक्त्या वेदोक्तवर्त्मना
दिने दिने देवलिङ्गं पूजयेच्छिवसंज्ञकम् ४१
तच्छेषत्वेन विष्णुं च ब्रह्माणं देवतान्तरम्
अर्चयेद् भुक्तिमुक्त्यर्थं न स्वतन्त्रतया द्विज ४२
गुरुदेवप्रदातारं नमस्कारादिभिर्मुदा
पूजयेत्तु विशेषेण ततोऽधीयीत रागवान् ४३

आचार्यमुखतो येन वेदानां च चतुष्टयम्
अधीतं सफलं तस्य जीवितं नहि संशयः ४४
अधीत्य किञ्चिन्मात्रं वा वेदानां गुरुपूजनम्
प्रकुर्याच्छ्रद्धया सार्धं ब्रह्मचर्यपरायणः ४५
वेदत्रयमधीतं चेद्रुद्रस्तस्य वशे भवेत्
विष्णुर्वेदद्वयं ब्रह्मा वेदमेकं न संशयः ४६
अधीतं च जपेन्नित्यं शिष्यानध्यापयेद् द्विजान्
पाठधारणमात्रेण ब्राह्मण्यं तस्य पुष्कलम् ४७
पातकानि च नश्यन्ति पाठधारणमात्रतः
इहलोके परत्रापि सुखं मोक्षमवाप्नुयात् ४८
विधत्तेऽध्ययनं यस्तु विधिः सोऽयं द्विजोत्तम
वेदाध्ययननिष्पत्तौ पर्यवस्यति सादरम् ४९
धर्मशास्त्राणि सर्वाणि वेदाङ्गानि तथैव च
अवेक्षेत मुदात्यर्थं विद्वद्भिर्ब्राह्मणैः समम् ५०
साधयेत् विविधानर्थान्न्यायेनैव न चान्यथा
दिने दिने च दानार्थं तपते ब्रह्मवादिने ५१
प्रत्याख्यानं न कुर्वीत स्वगृहे शयनार्थिनः
पूजयेत्तमतिप्रीत्या ब्राह्मणं गृहशायिनम् ५२
यया कयाचिद् विधया बह्वन्नं प्राप्नुयात् ततः
मध्याह्ने मृदमादाय पिण्डीकृत्य पृथक् पृथक् ५३
क्षालयेदेकपिण्डेन शिरः पापनिवृत्तये
नाभेरूर्ध्वं तथा ब्रह्मन्नधश्च तिसृभिस्तथा ५४
पादौ षड्भिश्च मृत्पिण्डैर्मात्रयामलकोपमैः
गोमयेनापि पिण्डेन तथाङ्गमवलेपयेत् ५५
पुनः प्रक्षालयेद् देहं मृल्लिङ्गैनैव मन्त्रितः
पुनराचमनं कृत्वा विधिवद् बुद्धिमान् द्विजः ५६
अभिमंत्र्य जलं शुद्धं तल्लिङ्गैर्वारुणैरपि
जलाधिदैवतं विद्वान् ध्यात्वा तोयस्य मध्यतः ५७
स्नायात् तत्तन्महातीर्थे कुर्यादाचमनं बुधः
द्रुपदानाम गायत्री वेदे वाजसनेयके ५८

सकृदन्तर्जले जप्त्वा पातकानि व्यपोहति
मृत्तिके हर मे पपमिति मन्त्रेण मृत्तिकाम् ५९
शिरसाधार्य च स्नायात् सर्वपापनिवृत्तये
आपमञ्जलिमादाय मन्त्रेणैवाभिमन्त्र्य च ६०
स्वमूर्ध्नि निक्षिपेत् तोयं सर्वपापनिवृत्तये
स्नानप्रकारो यः प्रोक्तो मध्याह्ने ब्राह्मणस्य तु ६१
प्रातः स्नानेऽपि तुल्योऽयमित्याहुः केचिदास्तिकाः
पुनः स्नायादथाचम्य कुर्यात् पूर्वोक्तवर्त्मना ६३
प्राणायामादिकं सर्वं सश्रद्धं मतिमत्तमः
सावित्रीं च जपेद् भक्त्या सहैवाष्टोत्तरं शतम् ६३
उपस्थानं ततः कुर्यात् स्वसूत्रोक्तेन वर्त्मना
अङ्गुल्या शङ्खमणिना पुत्रजीवेन वा बुधः ६४
पद्माक्षैः स्फाटिकैर्वापि कुशग्रंथ्याथ वा जपेत्
रुद्राक्षैरथवा नित्यं जपेन्मर्त्यस्त्वतन्द्रितः ६५
रुद्राक्षेण जपन्मर्त्यः साक्षाद् रुद्रसमो भवेत्
रुद्राक्षस्य च माहात्म्यं जाबालैरादरेण तु ६६
पठ्यते मुनिभिः सर्वैः शिवेन परमात्मना
अङ्गुल्या जप एकः स्याद्रेखयाष्टगुणो भवेत् ६७
जपस्तु शङ्खमणिना शतमष्टोत्तरम् भवेत्
जपस्तु पुत्रजीवेन भवेदेकशतत्रयम् ६८
पद्माक्षेण सहस्रं स्यात् स्फटिकेनायुतत्रयम्
कोटिकोटिकुशग्रन्थ्या रुद्राक्षेणान्तवर्जितम् ६९
अतः सर्वप्रयत्नेन रुद्राक्षेण सदा जपेत्
उच्चैर्जपादुपांशुश्च वरिष्ठः परिकीर्तितः २०
जिह्वाग्रजः शतगुणः सहस्रो मानसः स्मृतः
रजस्वलां च चण्डालं सूतिकां पतितं तथा ७१
दृष्ट्वा बौद्धमथाचम्य जपेन्मन्त्रं द्विजोत्तमः
ब्रह्मयज्ञं ततः कुर्यात् स्वसूत्रोक्तेन वर्त्मना ७२
देवान् ऋषीन् पितृगणान् तर्पयेदंभसा क्रमात्
सायंकाले स्वसूत्रोक्तवर्त्मनैव द्विजोत्तम ७३

कृत्वा शेषं प्रकुर्वीत श्रद्धया परया सह
स्मृत्वा तानि यथाशक्ति प्रकुर्याच्छ्रद्धया सह ७४
त्रिपुण्ड्रधारणं मुक्त्वा कर्माणि कुरुसे तु यः
अन्यानि यानि कर्माणि वेदेन विहितानि च ७५
तेनैवाचारितं सर्वं व्यर्थं चानर्थकारणम्
एवं दिने दिने कुर्यात् कर्म नित्यं द्विजोत्तम ७६
उपात्तदुरितच्छेदः सिध्यत्येव न संशयः
यो नाचरति विध्युक्तं निषिद्धं च करोति वा ७७
तस्य पापानि सन्तीति लक्षयेदविचारतः
नित्यानुष्ठानतः क्षीणमहापापमलस्य तु ७८
चित्तशुद्धिर्भवेच्छुद्धया दोषदृष्टिस्तुसंसृतेः
संसारदोषदृष्टयैव विरक्तिर्जायते द्विज ७९
विरक्तस्यैव संसारात् संन्यासः स्यान्न संशयः
विरक्तिर्द्विविधा प्रोक्ता तीव्रातीव्रतरेति च ८०
सत्यामेव तु तीव्रायां न्यसेद् योगी कुटीचके
शक्तौ बहूदके तीव्रतरायां हंससंज्ञके ८१
मुमुक्षुः परमे हंसे साक्षाद् विज्ञानसाधने
सन्यसेन्नित्यकर्माणि मुमुक्षुः परहंसकः ८२
अन्ये काम्यानि कर्माणि न नित्यं कर्म सत्तम
मुमुक्षुः परहंसाख्यः साक्षान्मोक्षैकसाधनम् ८३
अभ्यसेद्ब्रह्मविज्ञानं वेदान्तश्रवणादिना
ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ८४
शान्तिदान्त्यादिभिः सर्वैः साधनैः सहितो भवेत्
शान्तिर्बाह्येद्रियाणां तु चरतां विषयेषु च ८५
व्यावृत्तिर्मनसो दान्तिस्तितिक्षा च सहिष्णुता
समाहितत्वमेकाग्र्यं संन्यासो नाम कर्मणाम् ८६
त्यागः संकल्पना साक्षात् शास्त्रोक्तेनैव वर्त्मना
संन्यासः कर्मसन्त्यागद्वारेण ब्रह्मवेदने ७७
अविद्यानाशके शुद्धे विप्रेन्द्रोपकरोति हि
बहिःप्रवृत्तिव्यावृत्तिद्वारेण ब्रह्मवेदने ८८

शान्तिर्दान्तिस्तथैवाग्र्य विप्रेन्द्रोपकरोति हि
एवमन्यानि सर्वाणि दृष्ट्द्वारेण वेदने ८९
उपकुर्वन्ति नादृष्टद्वारेणैव तु केवलम्
तथाप्यङ्गानि विद्यादि जन्मनः प्रतिबन्धकम् ९०
पापसङ्घातमप्यर्थात् घ्नन्ति सत्यमुदीरितम्
अतः शान्तिं तथा दान्तिं संन्यासं च तितिक्षुताम् ९१
ऐकाग्र्यं गुरुभक्तिं च शिवभक्तिं तथैव च
अन्यच्चाङ्गतया वेदे श्रुतं च ज्ञानसिद्धये ९२
साधयेत् सर्वयत्नेन मुमुक्षुः परहंसकः
तस्मात् सर्वप्रयत्नेन मोक्षसिद्ध्यर्थमात्मनः ९४
विज्ञानवैदिक शुद्धं साधयेदप्रमादतः
ज्ञानार्थं कर्म सश्रद्धं कुर्यान्नित्यमतन्द्रितः ९४
कर्मणा न हि विज्ञानं विना मर्त्यस्य सिध्यति
नैमित्तिकं च कर्तव्यं पापानां विनिवृत्तये ९५
पापिष्ठस्य परिज्ञानं सर्वथा नोपपद्यते
अनर्थं चावशो याति मानवः पापकर्मणा ९६
अतो नैमित्तिकं कुर्याच्छ्रद्धया कर्म नित्यवत्
नित्यनैमित्तिकादन्यद्वरिष्ठं नैव विद्यते ९७
नित्यनैमित्तिकं कर्म यः करोति द्विजोत्तमः
स धीरः स तु सर्वज्ञः स साक्षाद् वेदवित्तमः ९८
अतः कुर्वीत विद्यार्थं नित्यनैमित्तिकं बुधः ॥
इत्युपपुराणे पाराशरे नवमोऽध्यायः ९

## अथ दशमोऽध्यायः

श्रीपराशर उवाच
निषिद्धमथ वक्ष्यामि समासेन न विस्तरात्
श्रद्धया परिहाराय तच्छृणु ब्राह्मणोत्तम १
उपनीतो द्विजस्त्वस्य गुरोः पार्श्वे प्रसादतः
निवसन् सर्वमाचारं शिक्षयेच्च दिने दिने २
आह्वानेन विना वेदान् नाधीयीत द्विजोत्तमः

अवेक्षमाणः स्वाचार्यमनुद्यतकरस्तथा ३
शयानो वापि गच्छन् वा तिष्ठन् वापि कदाचन
उपेक्षां परिवादं च न कुर्याद् वेदवादिनः ४
गुरोस्तु सन्निधौ नित्यं न यथेष्टासनो भवेत्
न कीर्तयेद् गुरोर्नाम निन्दां न शृणुयात् सदा ५
यस्मिन् देशे गुरोः निन्दा श्रूयते श्रवणेन तु
गच्छेदन्यत्र तद्देशात् छिद्रं कर्णौ पिधाय च ६
कर्णप्रासारणं नैव कुर्यादाचार्यसन्निधौ
पादप्रसारणं नैव कुर्यादाचार्यसन्निधौ ७
छत्रं च पादुकां चैव मोहेनापि न धारयेत्
वर्जयेत् ग्रहणं हासं सर्वं मोहं तथैव च ८
माधुर्यवर्जितां वाचमहितां च विवर्जयेत्
अनृतेनापि संयुक्तामालस्येन तथैव च ९
हर्षं शोकं तथा कामं तथैव प्राणिहिंसनम्
क्रोधं लोभं तथा दम्भं विशेषेण विवर्जयेत् १०
अष्टम्यां च तथा षष्ठ्यां चतुर्दश्यां च पर्वणि
त्रिजन्मनि तथाभ्यङ्गं वर्जयेद्रोगवर्जितः ११
अर्कवारे गुरोर्वारे भौमवारे द्विजोत्तम
शुक्रवारे तथाभ्यङ्गं वर्जयेद् रोगवर्जितः १२
अक्षद्यूतं विनोदं च नृत्यगीतादिकं तथा
अशिष्टजनसंसर्गं दूरतः परिवर्जयेत् १३
अनधीत्य द्विजो वेदान् नैव स्नायात् कदाचन
गुरोरनुज्ञाहीनश्च तथा चीर्णव्रतोऽपि च १४
अधिकामात्मनो भार्यां रूपलावण्यवर्जिताम्
गोत्रानुकूलहीनां च न गृह्णीयात् कदाचन १५
पञ्चदश्यां चतुर्दश्यामष्टम्यां च त्रिजन्मनि
षष्ठ्यामज्ञानतो वापि मैथुनं न समाचरेत् १६
प्रमादं न वदेन्नॄणां न वासत्यं वदेत् सदा
नाहितं प्रवदेच्चौर्यं न कुर्यान्मोहितोऽपि वा १७
राजन्यवैश्यशूद्रेभ्यः पतितादन्त्यजादपि

कृतघ्नाच्च न गृह्णीयात् धनधान्यादिकं बुधः १८
अधार्मिकजनैर्व्याप्ते तान्त्रिकैश्च समावृते
देशे शूद्राधिके वापि द्विजो न निवसेत् सदा १९
वैरं विवादं मात्सर्यं न कुर्यात्तु कदाचन
प्रशंसामात्मनोऽप्येवमशिष्टैश्चाभिभाषणम् २०
पातकानि समस्तानि कुर्वन्तं पुरुषं बुधः
दृष्ट्वापि न वदेन्नित्यं विजानन्नात्मनो हितम् २१
पतितं पतितं चौरं चौरं प्रोच्य तथैव च
वचनात्तुल्यदोषः स्याद् द्विगुणोऽसत्यभाषणात् २२
तस्माद् दृष्टं श्रुतं दोषं समस्तं जनसंसदि
न वदेन्मोहतो वापि न स्मरेच्च कदाचन २३
भास्करं शशिनं वापि नेक्षेतैवानिमित्ततः
न मध्यगं न तोयस्थं नास्तं यातं कदाचन २४
ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमम्
एभिः सहैव वासं च वर्जयेन्मतिमत्तमः २५
चापमिन्द्रस्य नेक्षेत सन्ध्यां गां च तथैव च
विद्युतं च महावृष्टिं ग्रहान् शुक्रादिकानपि २६
अलिङ्गनं च दम्पत्योर्मैथुनं चापरस्य तु
विरामूत्रोत्सर्जनं नैव नग्नां च न विलोकयेत् २७
प्रेतं क्रुद्धमुखाचार्यं रागादन्यस्त्रियं तथा
रजस्वलां तथोदक्यां मत्तान्नैव विलोकयेत् २८
भार्यया सह पुत्रेण बन्धुभिश्च तथैव च
आचार्येण न भुञ्जीयात् तथान्यैरपि जन्तुभिः २९
न लङ्घयेत् तथा जन्तून् नाधितिष्ठेत् कदाचन
न शूद्राय परिज्ञानं दद्याद्वेदमुखेन तु ३०
आत्मानं नावमन्येत जीर्णवस्त्रादिभिस्तथा
विभवे सति भार्यां च पुत्रांश्चैव विशेषतः ३१
अस्त्रशस्त्रादिभिः सर्वैर्गजैरश्वैस्तथैव च
मूर्खैरपि च संसर्गं दूरतः परिवर्जयेत् ३२
अप्सु नग्नो न तिष्ठेत जलं नाञ्जलिना पिबेत्

कूपस्नानं न कुर्वीत न नग्नो मतिसत्तम ३३
स्नानहीनो न भुञ्जीयात् देवपूजादिवर्जितः
अदत्वा यतये भिक्षां तथैव ब्रह्मचारिणे ३४
बालातपञ्च चाण्डालं प्रेतधूममवैदिकम्
अपस्मारादिसंयुक्तं दूरतः परिवर्जयेत् ३५
सन्ध्याकाले स्वापनं च मैथुनं गमनं तथा
न कुर्यान्मोहतो वापि श्रुतेरध्ययनं द्विज ३६
पादप्रक्षालनं चापि न कुर्याच्चरणेन तु
न ब्राह्मणं नृपं वैश्यं स्पृशेदग्निं वृथा जलम् ३७
वक्त्रेण वामहस्तेन जलं नैव पिबेद् बुधः
अयोनौ नोत्सृजेद्रेतः शुक्रं नैव पिबेद् बुधः ३८
स्मशानचर्मरोमास्थिकपालादीनि न स्पृशेत्
परैराच्छादितं वस्त्रं पादुकां छत्रमेव च ३९
अन्यानि यानि कर्माणि वेदेन विहितानि च
स्मृत्या तानि यथाशक्ति प्रकुर्याच्छ्रद्धया सह ४०
त्रिपुण्ड्रधारणं मुक्त्वा कर्माणि कुरुते तु यः
तेनैवाचरितं सर्वं व्यर्थं चानर्थकारणम् ४१
वेदवादपरित्यागं न कुर्यान्मोहतोऽपि वा
यदि कुर्यात् प्रमादेन पतत्येव न संशयः ४२
श्वसूकरखरोष्ट्रादीन् जन्तून्नित्यं न संस्पृशेत्
लशुनं गृञ्जनं वापि मत्स्यं मांसं तथैव च ४३
वेदवाह्यागमान् ब्रह्मन् वेदबाह्यांश्च वैष्णवान्
वेदवाह्यांस्तथा चान्यान् गृह्णीयान्नैव वैदिकः ४४
वेदवाह्यागमस्पृष्टान् मनुष्यानखिलानपि
श्रौतस्मार्तपरो मर्त्यो मोहेनापि न संस्पृशेत् ४५
वेदवाह्यागमस्पृष्टान् मोहेनापि स्पृशेद्यदि
श्रौतधर्मपरो मर्त्यः सचैलं स्नानमाचरेत् ४६
वेदबाह्यागमाचारं समस्तं मोहतोऽपि वा
न कुर्याद् वैदिको मर्त्यः कुर्याच्चेत् पतितो भवेत् ४७
भस्मना वेदसिद्धेन त्रिपुण्ड्रं देहगुण्ठनम्

रुद्रलिङ्गार्चनं चापि मोहतो वापि न त्यजेत् ४८
ख्यातिलाभादिसिध्यर्थमपि विष्णवागमादिषु
स्थितं पुराड्रान्तरं नैव धारयेद् वैदिको जनः ४९
वेदबाह्यागमाचारं समस्तमविशेषतः
मोहेनापि न गृह्णीयाद्गृह्णीयाच्चेत्पतत्यधः ५०
यज्ञो दानं तपः कर्म न त्यजेन्मोहतोऽपि वा
अन्यच्च विहितं कर्म स्मृत्या वेदेन च द्विजः ५१
धर्मशास्त्रैश्च वेदैश्च प्रतिषिद्धं समासतः
कदाचिदपि मोहाद्वा वैदिको न समाचरेत् ५२
मध्यदेशादिसंसिद्धं सदाचारं समाचरेत्
श्रुतिस्मृतिविरुद्धं तु तत्रापि न समाचरेत् ५३
सर्वदेशेषु यः श्रुत्या स्मृत्या वा विहितस्तथा
आचारोऽप्रतिषिद्धश्च स प्रमाणं न संशयः ५४
सोऽपि पुरायेषु देशेषु मध्यदेशादिषु द्विज
अतीवमानमन्यत्र स्थितोऽयमुभयात्मकः ५५
ब्रह्मलोके तथा चैन्द्रे प्राजापत्ये च मानुषे
श्रुतिस्मृतिविरुद्धश्च सदाचारः प्रवर्तते ५६
देवानां च मुनीनां च मनुष्याणां सतामपि
प्रवर्तते दुराचारः कदाचिद् दुर्निवारकः ५७
महत्तरोऽपि भगवान् महादेवः प्रजापतिः
अभ्यधावत्पुरा पुत्रीमवशः कामपीडितः ५८
अहल्यामपि कल्याणीमादायेन्द्रः सुरोत्तमः
शप्तश्च गौतमेनैव सर्वेषामपि सन्निधौ ५९
वसिष्ठस्तूर्वशीं दृष्ट्वा प्रस्खलत् परिमोहितः
मत्स्यगन्धामहं दृष्ट्वा मुनीन्द्रा अपरास्तथा ६०
किं पुनर्मनुजा शूद्रा अधर्मबहुला मुने
अतः सर्वत्र सर्वेषां सम्भवत्येव दुष्कृतिः ६१
श्रौतस्मार्तसदाचारे श्रद्ध पुरायेन जायते
अश्रौते जायते वाञ्छा देहिनां पापकर्मिणाम् ६२
वेदाङ्गं धर्मशास्त्रं च पुराणं भारतं तथा

देशजातिकुलाचारमपरं च समासतः ६३
विरोधे सति वेदेन वेदमार्गैकसंस्थितः
ब्राह्मणः क्षत्रियोऽन्यो वा निःशङ्कं परिवर्जयेत् ६४
अतः सर्वं परित्यज्य श्रुत्युक्तं नित्यमाचरेत्
वेदानुसारि शास्त्रोक्तमपि ग्राह्यं द्विजोत्तम ६५
अतीन्द्रियार्थविज्ञाने प्रमाणं वेद एव हि
स्मृतयश्चापि तन्मूला नैवान्यत् सत्यमीरितम् ६६
धर्माधर्मादिविज्ञाने त्वागमाः पुरुषोदिताः
पञ्चरात्रादयः सर्वे न प्रमाणमिति स्थितिः ६७
वेदोदितसमाचारविपरीता भवन्ति ये
आचारास्तेषु ते सर्वे तेषु शुद्धस्य कीर्तिताः ६८
वेदाविरुद्धा आचारास्तेषु तेषु च सत्तम
तेऽपि तेषु च सर्वेषु विशुद्धस्य च कीर्तिताः ६९
अनुकूलस्तु वेदानामाचारस्तेषु यः स्थितः
सोऽयं वैदिकनिष्ठानामिति वाञ्छन्ति केचन ७०
वेदमूलतया नित्यं प्रवृत्ता अपि सत्तम
क्वचित् कदाचित्स्मर्तारस्तन्त्रार्थं च ब्रुवन्ति वै ७१
क्वचित् तन्त्रानुरोधेन धर्मं पौराणिका अपि
वदन्ति तादृशोंऽशस्तु ग्राह्यस्तन्त्रावलम्बिना ७२
पुराणे धर्मशास्त्रे वा योंशः श्रुत्या विरुध्यते
स तन्त्रार्थस्तु विज्ञेयः समासेन मनीषिभिः ७३
अतः सर्वं परित्यज्य विरुद्धं वेदमानतः
वेदाविरुद्धं वेदोक्तं गृह्णीयादपि सत्तम ७४
सर्वमुक्तं समासेन विज्ञेयं वेदवित्तमैः
इतः परं न विज्ञेयं किञ्चिदप्यास्तिकस्य तु ७५
इत्युपपुराणे पाराशरे दशमोऽध्यायः १०

अथ एकादशोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि चरितं पापकर्मिणाम्

शृणु तत् परिहाराय विप्र वेदार्थवित्तम १
महादेवं च विष्णुं च ब्रह्माणं देवतान्तरम्
सदा निन्दन्ति मोहेन मनुष्याः पापकर्मिणः २
महादेवसमं विष्णुं ब्रह्माणं देवतान्तरम्
मन्यन्ते विप्र मोहेन मनुष्याः पापकर्मिणः ३
देवानां प्रथमं देवं जन्मनाशादिवर्जितम्
रुद्रं विश्वाधिकं नैव मन्यन्ते पापकर्मिणः ४
चेतनाचेतनस्यास्य जगतो मूलकारणम्
मन्यन्ते न शिवं साम्बं मनुष्याः पापकर्मिणः ५
आगमान्तसमुत्पन्नमतिनिर्मलमास्तिक
आत्मज्ञानं च निन्दन्ति मनुष्याः पापकर्मिणः ६
शान्तिदान्त्यादिविज्ञानसाधनानि महान्ति च
न स्वीकुर्वन्ति मोहेन मनुष्याः पापकर्मिणः ७
रागद्वेषादिदोषांश्च मुने कुर्वन्ति सन्ततम्
नैव कुर्वन्ति यज्ञांश्च मनुष्याः पापकर्मिणः ८
वेदसिद्धेन मन्त्रेन त्रिपुण्ड्रं भस्मगुण्ठनम्
नैव कुर्वन्ति मोहेन मनुष्याः पापकर्मिणः ९
ऊर्ध्वपुण्ड्रं त्रिशूलं च वर्तुलं चतुरस्त्रकम्
धारयन्ति ललाटे वै मनुष्याः पापकर्मिणः १०
शङ्खचक्रगदापद्मवज्रपाशाङ्कुशादिभिः
अङ्किताश्च भवन्त्यज्ञा मनुष्याः पापकर्मिणः ११
त्यजन्ति सकलं कर्म सदा विध्युक्तमास्तिक
निषिद्धं कर्म कुर्वन्ति मनुष्याः पापकर्मिणः १२
त्यजन्ति वेदं वेदोक्तं तथा स्मृतिपुराणकम्
वेदाङ्गानि च मोहेन मनुष्याः पापकर्मिणः १३
पाञ्चरात्रे च कापाले पाषण्डेष्वपरेषु च
दीक्षिताश्च भवन्त्येव मनुष्याः पापकर्मिणः १४
अविमुक्तं कुरुक्षेत्रं पुण्डरीकपुरं तथा
आश्रयं नैव गच्छन्ति मनुष्याः पापकर्मिणः १५
कोकटेष्वपि देशेषु वेदसम्बन्धवर्जिताः

वर्तन्ते प्रीतिसंयुक्ता मनुष्याः पापकर्मिणः १६
वश्याकर्षणविद्वेषमारणादिषु कर्मसु
यजन्ते भ्रान्तिविज्ञाना मनुष्याः पापकर्मिणः १७
वेदमार्गपरिभ्रंशं वेदवाह्यपरिग्रहम्
कुर्वन्ति स्वात्ममोहेन मनुष्याः पापकर्मिणः १८
अभिषिक्तं च राजानं ब्राह्मणं च बहुश्रुतम्
निर्भयं च तथा राष्ट्रं बाधन्ते पापकर्मिणः १९
बहुनोक्तेन किं वेदमर्यादा बाधनं तथा
श्रद्धां नैव प्रकुर्वन्ति मनुष्याः पापकर्मिणः २०
इत्युपपुराणे पाराशरे एकादशोऽध्यायः ११

## अथ द्वादशोऽध्यायः

श्रीपराशर उवाच
अभक्ष्यमन्नं वक्ष्यामि समासेन न विस्तरात्
अन्नदोषेण चित्तस्य कालुष्यं सर्वदा भवेत् १
कलुषीकृतचित्तानां धर्मः सम्यक् न भासते
अधर्मो धर्मरूपेण विभाति च न संशयः २
स्वयं भातं परं ब्रह्म न भाति नावभासते
ब्रह्मविद्याभिवाञ्छा च कदाचिन्नैव जायते ३
किञ्चिदन्नं परब्रह्मप्रकाशप्रतिबन्धकम्
किञ्चित् तद्विषयज्ञानं जन्मनः प्रतिबन्धकम् ४
किञ्चिदीश्वरभक्तेस्तु जन्मनः प्रतिबन्धकम्
किञ्चित् साक्षात् परब्रह्मध्यानस्य प्रतिबन्धकम् ५
किञ्चिद्रुद्रस्य मूर्तेस्तु ध्यानस्य प्रतिबन्धकम्
किञ्चिद् विष्णोरजस्यापि ध्यानस्य प्रतिबन्धकम् ६
किञ्चित्तेषां विभूतेस्तु साधनप्रतिबन्धकम्
किञ्चिदर्कादिदेवानां ध्यानस्य प्रतिबन्धकम् ७
किञ्चिदज्ञानविज्ञानसाधनप्रतिबन्धकम्
किञ्चिद्यज्ञतपोदानकर्मणः प्रतिबन्धकम् ८
किञ्चिद् ब्राह्मणहत्यायाः किञ्चिच्चौर्यस्य कारणम्

किञ्चित्कादम्बरीपानश्रद्धायाः कारणं भवेत् ९
किञ्चिद् गुर्वङ्गनाभोगश्रद्धायाः कारणं भवेत् १०
किञ्चित्पापिष्ठसंसर्गश्रद्धाया जनकं भवेत्
किञ्चिद् विप्रविधानादि पातकादेश्च कारणम् ११
किञ्चिद् वेदपरित्यागश्रद्धाया जनकं भवेत्
किञ्चित् पाषण्डवादानां शुक प्राप्तेस्तु कारणम् १२
किञ्चित्पाषण्डधर्मस्यानुष्ठानस्यैव कारणम्
किञ्चिद् वेदोदिताचाराभावस्य हि तु कारणम् १३
किञ्चित्तान्त्रिकविज्ञानवैशिष्ट्यजनकं भवेत्
किञ्चिद् वैदिकविज्ञानं विशिष्याज्ञानकारणम् १४
किञ्चित्तान्त्रिकविज्ञानश्रद्धायाः कारणं भवेत्
किञ्चिद् वैदिकविज्ञानश्रद्धाभावस्य कारणम् १५
किञ्चित्तान्त्रिकसम्मानकारणं भवति द्विज
किञ्चिद् वैदिकसम्मानाभावस्यैव तु कारणम् १६
किञ्चित्प्रामाण्यसन्देहकारणं छन्दसामपि
तन्त्राणामपि विश्वासकारणं किञ्चिदास्तिक १७
नास्तिक्यकारणं किञ्चित् क्वचिन्मौर्ख्यस्य कारणम्
किञ्चिद् द्रोहस्य देवादौ कारणं भवति द्विज १८
किञ्चिद् रागादिदोषाणां कारणं विभ्रमस्य च
अतश्च मतिमानन्नमभक्ष्यं परिवर्जयेत् १९
त्यजेदनुपवीतानां यतेरन्नं तथैव च
यतिना प्रेरितस्यान्नमन्धस्य पतितस्य च २०
वेदाध्ययनहीनस्य वेदबाह्यावलम्बिनः
वेदानां द्वेषकस्यान्नं दैवतान्नं परित्यजेत् २१
श्रौतस्मार्तसदाचारविमुखस्य तथैव च
कृतघ्नस्य महारोगपीडितस्य विशेषतः २२
परदाररतस्यान्नं पिशुनस्य तथैव च
कन्याविक्रयिणश्चान्नं विशेषेण विवर्जयेत् २३
यतिनिन्दापरस्यान्नं सदा पापरतस्य च
श्रद्धाहीनस्य भार्यायाः श्वसुरस्य तथैव च २४

दरिद्रस्य च मूकस्य विशेषेण विवर्जयेत्
निर्मर्यादस्य मूर्खस्य विशेषेण विवर्जयेत् २५
प्रजारक्षणहीनस्य क्षत्रियस्य तथैव च
पुरोहितस्याशान्तस्य विशामन्नं विवर्जयेत् २६
अशौचसहितस्यान्नं अभिशप्तस्य चास्तिक
पाषण्डिनश्च शूद्रस्य विशेषेण विवर्जयेत् २७
तक्षोरन्नं विटान्नं च नर्तकान्नं च कर्षिणः
गणान्नं गणिकान्नं च वर्जयेत्तु विशेषतः २८
शस्त्रोपजीविनश्चान्नं ध्वजिनश्चान्नमेव च
रजकस्य तथैवान्नं विशेषेण विवर्जयेत् २९
गान्धर्वलोहकारान्नं सूतकान्नं तथैव च
अयाज्ययाजकस्यान्नं विशेषेण विवर्जयेत् ३०
अरक्षकस्य बालस्य चित्रकारस्य सत्तम
चिकित्सकस्य चाप्यन्नं विशेषेण विवर्जयेत् ३१
पौनर्भवस्य मूढस्य तथा वार्धुषिकस्य च
स्वर्णकारस्य चैवान्नं विशेषेण विवर्जयेत् ३२
मूर्खस्य च किरातस्य दूतिकस्य तथैव च
देवतानिन्दकस्यान्नं विशेषेण विवर्जयेत् ३३
वर्जनीयं तथैवान्नं तक्षादेर्यत्प्रकीर्तितम्
भुक्त्वा तद्ब्राह्मणो मर्त्यो मासादेव पतत्यधः ३४
उच्छिष्टान्नं सपत्न्यन्नं भीतस्य रुदितस्य च
क्षुत्पीडितस्य भुक्त्वान्नं वत्सरात्पतितो भवेत् ३५
श्राद्धान्नं सूतिकस्यान्नं वन्ध्यान्नं च तथैव च
वृथा पाकस्य भुक्त्वान्नं वत्सरात्पतितो भवेत् ३६
अस्त्रशस्त्रकरस्यान्नं तथा परवशस्य च
कारुकस्य तथा भुक्त्वा वत्सरात्पतितो भवेत् ३७
पुनर्भुवोऽतिलुब्धस्य विधवान्नस्य मोहितः
पिशुनस्य तथा भुक्त्वा वत्सरात् पतितो भवेत् ३८
सोमविक्रयिणश्चान्नं सुराविक्रयिणस्तथा
मांसविक्रयिणश्चान्नं भुक्त्वा सद्यः पतत्यधः ३९

शिवद्रोहपरस्यान्नं यतिनिन्दापरस्य च
विज्ञानदूषकस्यान्नं भुक्त्वा सद्यः पतत्यधः ४०
देवद्रोहपरस्यान्नं भस्मद्रोहपरस्य च
त्रिपुण्ड्रदूषकस्यान्नं भ्रातृद्रोहपरस्य च ४१
दग्धाङ्गस्यायुधैर्दिव्यैर्भुक्त्वा सद्यः पतत्यधः
दासस्य कुलमित्रस्य गोपालस्य तथैव च ४२
कुधनार्जितस्यापि द्विजैर्न भोक्तव्यमापदि
कुम्भकारस्य विप्राणां शेषभूतस्य सत्तम ४३
कर्षकस्य तथैवान्नं द्विजैर्भोक्तव्यमापदि
आपद्यपि न भोक्तव्यमन्येषामन्नमास्तिकैः ४४
प्रायश्चित्तं तु कर्त्तव्यं यदि भुक्तं द्विजातिभिः
पिण्याकं सक्तवस्तैलं गव्यं तक्रादिकं तथा ४५
शूद्रादेव तु संग्राह्यं न द्विजेभ्यः कदाचन
वृन्ताकं गृञ्जनं चैव लशुनं ग्रामकुक्कुटम् ४६
अन्यच्च तद्भवद्रव्यं ब्राह्मणो नैव भक्षयेत्
औदुम्बरमलाबुं च गुम्फलं किंशुकं तथा ४७
वृश्चनप्रभवं सर्वं व्रतस्थो नैव भक्षयेत्
केशकीटादिभिर्दुष्टं भस्मना संस्कृतं तथा ४८
आज्येन च श्वकाकादिदूषितं नैव भक्षयेत्
उदक्याशुचिचाण्डालप्रमुखैर्दृष्टमोदनम् ४९
तथा पर्युषितं नित्यं ब्राह्मणो नैव भक्षयेत्
विवत्सायाश्च गोक्षीरं सन्धिनीक्षीरमेव च ५०
औष्ट्रं तथाविकं नित्यं ब्राह्मणो नैव भक्षयेत्
अभक्ष्यमपि भक्ष्यं स्यादौषधं तु च रोगिणः ५१
अन्तरेण सुराद्रव्यमित्याह परमेश्वरः
भक्ष्यस्य भक्षणाच्चित्तं परिशुद्धं भवेन्नृणाम् ५२
चित्तशुद्धं प्रमाज्ञानं जायते पारमेश्वरम्
पारमेश्वरविज्ञाने संजाते देववाक्यतः ५३
भिद्यते हृदयग्रन्थिरित्याह परमा श्रुतिः ५४
इत्युपपुराणे पाराशरे अष्टमोऽध्यायः १२

## अथ त्रयोदशोऽध्यायः

श्रीपराशर उवाच
अथातः सम्प्रवक्ष्यामि प्रायश्चित्तं समासतः
हिताय सर्वमर्त्यानां केवलं करुणाबलात् १
ब्रह्महा निर्जने शुद्धे नदीतीरेऽथवा वने
कुटीं कृत्वा तृणैः शुष्कैः काष्ठैः शुष्कैरपि स्थिरम् २
भिक्षामादाय विप्रेभ्यः कृत्वा शवशिरोध्वजम्
अपराह्णे सकृन्मौनी भुञ्जीयादतितापवान् ३
स्नानं त्रिषवणं कुर्याद् ब्राह्मणानर्चयेत् सदा
गवां शुश्रूषणं कुर्यादश्वत्थमभिरक्षयेत् ४
दोषं प्रशंसयेन्नृणां निर्लज्जो विजितेन्द्रियः
वने तु वर्तमानोऽयं फलमूलाशनो भवेत् ५
ब्रह्महत्याकृतं पापं द्वादशाब्देन नश्यति
अबुद्धिपूर्वकस्येदं प्रायश्चित्तं मुनीश्वर ६
भस्मशायी भवेन्नित्यं भस्मच्छन्नस्त्रिपुण्ड्रधृक्
रुद्राध्यायी भवेद् भक्त्या मासमेकमतन्द्रितः ७
प्रणवं वा जपेन्नित्यं सदा पञ्चाक्षरं तु वा
प्रायश्चित्तं भवेदेतद् रहस्यस्य न संशयः ८
महत्तराणामन्येषां रहस्यानां तथैव च
कामतश्चेन्नृणां शुद्धिः पूर्वोक्तेनैव वर्त्मना ९
चरतां मरणादेव नैव मार्गान्तरेण तु
सुरापी तु सुरापानमग्निवर्णं घृतं तु वा १०
गोमूत्रं वा मृतः पीत्वा मुच्यते पानदोषतः
वैदिकः कामतो पीत्वा ब्राह्मणो मदिरामिमाम् ११
सद्यः पतति विप्रेन्द्र स्ववंशं पातयत्यपि
सुरापस्य तु पापस्य ब्रह्महत्यादि पातकम् १२
सत्यमेव मया प्रोक्तं कलां नार्हति षोडशीम्
तस्मात् त्यजेत् परित्राता पश्चाच्छुद्धो भवेद् द्विजः १३
वेदधर्मपरः साक्षात् पुनः संस्कारमर्हति
स्तेयी प्रचीर्णकेशोऽथ आदाय मुशलं ततः १४

उक्त्वा स्वकर्म राजानं गत्वा तेन हतस्ततः
स्तेयदोषाद् विमुच्येत नात्र कार्या विचारणा १५
गुरुदाराभिगामी च तत् पापविनिवृत्तये
स्वयं स्ववृषणं शेफं ब्रह्मन्नुत्पाद्य चाञ्जलौ १६
निधायानशनो गच्छेद् वाग्यतो दक्षिणां दिशम्
महापातकिनां यस्तु पञ्चमः परिकीर्तितः १७
जितेन्द्रियश्चरेच्छुद्ध्यै तप्तकृच्छ्रं तु वत्सरम्
गत्वा दुहितरं चापि स्वसारं च स्नुषामपि १८
तप्तकृच्छ्रं चरेद् विप्रो मत्या वृत्तिविवर्जितः
मातृष्वसां तथा गत्वा मातुलानीं पितृष्वसाम् १९
भागिनेयीं तथा विप्र कुर्यात् कृच्छ्रातिकृच्छ्रकौ
कुर्याच्चान्द्रायणं वापि स्नायात्तीर्थेषु वा पुनः २०
भ्रातृभार्याभिगमने चान्द्रायणचतुष्टयम्
मातुलस्य सुतां गत्वा कुर्याच्चान्द्रायणं द्विजः २१
सखिभार्याभिगमने तप्तकृच्छ्रं समाचरेत्
चाण्डालीगमनं कृत्वा तप्तकृच्छ्रत्रयं चरेत् २२
कृच्छ्रं सान्तपनं वापि तत्पापविनिवृत्तये
कुयोनिषु तथा गत्वा रेतस्तोये विसृज्य च २३
कृच्छ्रसान्तपनं कुर्यात् तत्पापविनिवृत्तये
आस्यमैथुनशुद्ध्यर्थं चरेच्चान्द्रायणद्वयम् २४
गवि मैथुनशुद्ध्यर्थं तथा कुर्याद् द्विजोत्तम
क्षत्रियस्याङ्गनां गत्वा प्राजापत्यद्वयं चरेत् २५
आवर्तयेत् तथा वृत्तौ ब्राह्मणो नापरः पुमान्
ब्रह्मचार्यवकीर्णश्च नैर्ऋतं पशुमालभेत् २६
द्विजस्त्रीगमने भिक्षुरवकीर्णिव्रतं चरेत्
गत्वा वेश्यां द्विजः कुर्यात् प्राजापत्यमतन्द्रितः २७
पतितामसकृद् गत्वा प्राजापत्यं तथैव च
विप्रस्य कन्यकां गत्वा विप्रश्चान्द्रायणं चरेत् २८
उदक्यां गमनं कृत्वा त्रिरात्रेण विशुद्ध्यति
पुष्पस्त्रीमसकृद् गत्वा कृच्छ्रं चान्द्रायणं चरेत् २९

नटशैलूषयोर्गत्वा स्त्रियं चान्द्रायणं चरेत्
सर्वपापविशुद्ध्यर्थं ध्यायेद्देवं त्रियम्बकम् ३०
साम्बं चन्द्रकलाचूडं नीलग्रीवं शुचिस्मितम्
वरदाभयहस्तं च लसत्केयूरमण्डितम् ३१
सर्वालङ्कारसंयुक्तं शुद्धस्फटिकसंनिभम्
अर्धयामं मुहूर्तं वा हृदयाम्भोजमध्यमे ३२
जपेत् पञ्चाक्षरीं विद्यां प्रणवेन समन्विताम्
शिवध्यानानलेनैव पापसंघातकाननम् ३३
क्षणाद्दग्धं भवेद् ध्यानाद् यथावद् वस्तु सिद्ध्यति
बहवः खलु रुद्रस्य ध्यानेन ब्रह्मवित्तम ३४
अनायासेन संसाराद् विमुक्ता मानवा भुवि
किं पुनः पापसङ्घाताद्विमोक्षः शङ्करस्य तत् ३५
ध्यानेन मनुजस्तस्माद् ध्यानमेव समभ्यसेत्
विष्णवादिदेवताध्यानमपि पापविनाशनम् ३६
तद्भक्तपापशुध्यर्थं तद्ध्याने यत्नवान् भवेत्
शिवध्यानसमध्यानं नास्ति नास्ति श्रुतौ स्मृतौ ३७
अतः सर्वानपि त्यक्त्वा शिवमेव विचिन्तयेत्
देवानामपि सर्वेषामादिभूतो हि शङ्करः ३८
अतः सर्वान् परित्यज्य ध्यायेदीशानमव्ययम्
प्रयत्नेनैव पापेभ्यो मोक्षमिच्छति यः पुमान् ३९
शिवमेव सदा ध्यायेत् साम्बं चन्द्रार्धशेखरम् ४०
इत्युपपुराणे पाराशरे त्रयोदशोऽध्यायः १३

## अथ चतुर्दशोऽध्यायः

श्रीपराशर उवाच
भूयोऽपि सर्वपापानां प्रायश्चित्तमनुत्तमम्
प्रसिद्धानां च गुप्तानां प्रवक्ष्यामि समासतः १
पापसङ्घातकान्तारं स्थूलं निर्दग्धुमिच्छताम्
ज्ञानदावानलः शीघ्रं सम्पाद्यः सर्वयत्नतः २
ज्ञानानले हि सञ्जाते सुदीप्ते पापकाननम्

क्षणाद्दग्धं भवत्येव प्रतिबन्धविवर्जिते ३
मणिमन्त्रौषधैर्वह्निः सुदीप्तोऽपि यथेन्धनम्
प्रदग्धुमेव शक्तः स्यात् प्रतिबन्धस्तथैव हि ४
ज्ञानाग्निरपि सञ्जातः सुदीप्तः सुदृढोऽपि च
प्रदग्धुं नैव शक्तः स्यात् प्रतिबन्धस्तु कल्मषम् ५
भावना विपरीता या या चासम्भावना शुक
कुरुते प्रतिबन्धं सा खलु ज्ञानस्य नापरम् ६
वाक्यानुग्राहकन्यायपरिशीलनलक्षणात्
मननात्तत्र चैकाग्र्यान्निदिध्यासनसंज्ञकात् ७
भावने द्वे निवर्तेते निवृत्यैव तथानघ
ज्ञानस्य प्रतिबन्धश्च स्वयमेव विनश्यति ८
निवृत्तप्रतिबन्धश्च यथा दहति पावकः
तथा सकारणं पापं प्रबोधाग्निर्दहत्यसौ ९
आम्नायान्तमहावाक्यसूक्ष्मतात्पर्यनिर्णयात्
उपक्रमादिभिर्लिङ्गैः षड्भिः साध्यो द्विजोत्तम १०
वाक्यावयवभूतैस्तु मुमुक्षोरधिकारिणः
सर्ववेदान्तसंसिद्धः साधनैः सहितस्य च ११
प्रत्यग्ब्रह्मैक्यविज्ञानं जायते भवभेषजम्
विज्ञानकारणस्यास्य श्रवणस्य द्विजोत्तम १२
प्राधान्यं मननादस्ति निदिध्यासनतोऽपि च
उत्पत्तावन्तरङ्गं हि ज्ञानस्य श्रवणं बुध १३
तटस्थमन्यथावृत्या मननं चिन्तनं तथा
इति कर्तव्यकोटिः स्याच्छान्तिदान्त्यादयस्तथा १४
तटास्थ एव रुद्रस्य प्रसादः पण्डितोत्तम
अन्तरङ्गमतीव स्यात् तदर्थान्यखिलानि वै १५
प्रसादो नाम रुद्रस्य भवानीसहितस्य तु
वाक्यलक्षणसामग्रीप्रवृत्तिप्रभवस्य तु १६
वृत्तिज्ञानस्य शुद्धस्य चिदभिव्यक्तियोग्यता
योग्यतालक्षणे साक्षात् प्रसादे शाम्भवे शुभे १७
तीव्रे तीव्रतरे मन्दे सञ्जाते सति देहिनाम्

वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः १८
बुभुक्षायां तथाज्ञोस्मीऽत्याभासाज्ञानवस्तुनः
असत्यालम्बनत्वेन सत्यः सर्वजडस्य तु १९
साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः
आनन्दरूपः सर्वार्थसाधकत्वेन हेतुना २०
सर्वसम्बन्धकत्वेन सम्पूर्णः शिवसंज्ञितः
जीवेशत्वादिरहितः केवलः स्वप्रभः शिवः
स्वानुभूतिप्रवृत्तिस्तु वृत्तौ सत्यां घृणानिधिः २१
बुभुक्षोरात्मनः साक्षादभिव्यक्तो भवेत् स्वयम्
शिवादिनामहीनस्य ध्यानहीनस्य शूलिनः २२
शिवभक्तिविहीनस्य त्रिपुण्ड्रोद्धूलनादिषु
श्रद्धाहीनस्य रुद्रस्य प्रसादाच्छुद्धवेदनम् २३
साक्षान्मुक्तिश्च विप्रेन्द्र नैव सिध्यति देहिनः
शान्तिदान्त्यादयः पुंसां सम्पन्ना अपि सत्तम २४
त्रिपुण्ड्रधारणादीनि न भविष्यन्ति सर्वथा
यथा विशिष्टे मानुष्ये ब्राह्मणे पशुविग्रहे २५
यज्ञदानाद्यनुष्ठानं दुर्लभं खलु देहिनाम्
तथा श्रौतेषु धर्मेषु त्रिपुण्ड्रं भस्मगुण्ठनम् २६
रुद्रलिङ्गार्चनं चापि दुर्लभं हि शरीरिणाम्
त्रिपुण्ड्रधारणं तिर्यग् भस्मना चावगुण्ठनम् २७
सुदुर्लभमिति ज्ञात्वा खलु सर्वेश्वरोऽकरोत्
निर्दुःखो निर्मलः साक्षान्नित्यानन्दो निरञ्जनः २८
किमर्थमकरोद् ब्रूहि शिवः साक्षान्निरामयः
अविभाज्यः सदा कर्ता सदा भोक्ता महेश्वरः २९
किमर्थमकरोद् ब्रूहि साधकस्योदितं मुने
तस्मात्सुदुर्लभं नृणामिति ज्ञात्वा महेश्वरः ३०
त्रिपुण्ड्रधारणं भस्मगुण्ठनं चाकरोत् सदा
अनिष्पन्नेन कर्तव्यं त्रिपुण्ड्रादेश्च धारणम् ३१
विशेषेण स्वलाभाय नान्यलाभाय सत्तम
स्वलाभमन्तरेणापि परिचारार्थमास्तिक ३२

निष्पन्नेनापि कर्तव्यं यथा सर्वेश्वरेण तु
अतः सर्वाङ्गनिष्ठस्य प्रत्यग्ब्रह्मैक्यगोचरा ३३
या वृत्तिमानसी शुद्धा जायते वेदवाक्यतः
तस्यां या चिदभिव्यक्ता स्वतः सिद्धा च शाङ्करी ३४
तदेव ब्रह्मविज्ञानं तदेवाज्ञाननाशनम्
ब्रह्मज्ञाने च सञ्जाते ब्रह्माज्ञानं निवर्तते ३५
घटज्ञाने तु सञ्जाते घटाज्ञानं यथा तथा
अज्ञानस्यैव कार्याणि कारणान्यखिलान्यपि ३६
अज्ञाननाशतो नाशमायान्त्येव न संशयः
कर्त्रादिकारकग्रामप्रसूतिः खलु कर्मतः ३७
कर्माभावे तु कर्त्रादि कारकोत्पत्तिरेव न
देहेन्द्रियादिसङ्घाताभिमानस्था हि कर्तृता ३८
कर्तृत्वं वास्तवं नैव जीवस्य मुनिसत्तम
भोक्तृत्वं वा क्रियस्यास्य ब्रह्मभूतात्मनः सदा ३९
कर्तृत्वं चैव भोक्तृत्वं यदि स्वाभाविकं भवेत्
आत्मनो न निवर्तेत केनचित् साधनेन च ४०
शरीराद्यभिमानेन जातोऽयमिति मन्यते
तथा कृशोऽहं कृष्णोहमिति भ्रान्त्याऽभिमन्यते ४१
ब्राह्मणोऽहं मनुष्योऽहं ब्रह्मचारी गृही वनी
भिक्षुकोऽहमिति भ्रान्त्या निर्विशेषोऽभिमन्यते ४२
एकोऽपि सर्वदेहेषु भ्रमाद्भिन्नोऽवभासते
घटाकाशमठाकाशविभेदेन यथा नभः ४३
अक्रियोऽपि स्वतन्त्रात्मा भ्रान्त्या सर्वविकारवान्
जलस्य चलनादेव यथा चलति भास्करः ४४
अतीव धवलो रक्तो विभाति स्फटिको यथा
रक्तोपाधिवशादात्मा संसारीवान्यसंक्रमात् ४५
आत्मानात्मविवेकाख्यप्रदीपादित्यसन्निधौ
कथं वर्णाभिमानाख्यं तमस्तिष्ठति सत्तम ४६
वर्णाश्रमवयोऽवस्थाविशेषो यस्य भासते
तस्यैव हि निषेधाश्च विधयः सकला अपि ४७

सर्वोपाधिविनिर्मुक्तं चैतन्यं सर्वसाक्षिणम्
स्वात्मना पश्यतः कर्म कथं ब्रूहि शुभाशुभम् ४८
सर्वसाक्षिणमात्मानं सर्वसम्बन्धवर्जितम्
साक्षात् ब्रह्मतया पश्यन् कथं बध्येत कर्मणा ४९
तस्माद् ब्रह्मात्मविज्ञानं ग्रसत्यज्ञानमात्मनः
अज्ञानजनितं कर्मं तत्फलं च न संशयः ५०
समूलं कर्म यद् ज्ञानं ग्रसते स्वयमेव तु
तदेव सर्वपापानां प्रायश्चित्तमनुत्तमम् ५१
प्रतिबन्धविनिर्मुक्त परमं ब्रह्मवेदनम्
विनाखिलं कृतं पापं केन नाशयति द्विजः ५२
अतः परमविज्ञानमज्ञानं ग्रसते ततः
दृगात्मनाखिलं दृश्यं ग्रसते ज्ञानसम्भवम् ५३
अज्ञानमपि तत्कार्यं ग्रस्तमप्यात्मवेदनात्
प्रारब्धाफलकर्मान्तं भाति चाभासरूपतः ५४
यदा भासतया भाति जगद्दग्धमपि स्वतः
जीवन्मुक्तस्तदा विद्वान् न स भूयोऽभि जायते ५५
जीवन्मुक्तस्तदा भातमभातं चाखिलं जगत्
पश्यन्नपि पृथक् स्वस्मात् पश्यति स्वात्मनैव तु ५६
भातं यथा यथा भातमभातमिति भाति यत्
प्रकाशाव्यभिचारित्वात् ब्रह्मणो भानमेव तत् ५७
प्रकाशाव्यभिचारेण प्रकाशं पश्यतोऽखिलम्
किं प्रकाशातिरेकेण विभाति न विभाति वा ५८
तस्मात् सम्पूर्णविज्ञानं सर्वकर्मनिवर्तकम्
कारणाज्ञाननाशेन न कर्माप्रतिकूलतः ५९
अज्ञाने सति कर्तृत्वं तस्यैव तु शुभाशुभम्
तथा सति कथं कर्म बाधतेऽज्ञानमात्मनः ६०
मूलभूते स्थितेऽज्ञाने ततो द्वैतं विजायते
शोभनाशोभनाध्यासस्तत्र पुंसः प्रजायते ६१
रागद्वेषौ च जायेते शोभनाशोभनभ्रमात्
प्रवर्तते पुनर्देही धर्माधमौ प्रवर्ततः ६२

धर्माधर्मोपभोगाय शरीरं जायते वशम्
एवं पुनः पुनर्ब्रह्मन् चक्रवद् भ्राम्यते नरः ६३
सम्यग्ज्ञाने समुत्पन्ने तेनाज्ञानं निवर्तते
तन्निवृत्तौ च तन्मूलं समस्तं प्रविनश्यति ६४
अतः संसारनाशाय ज्ञानमेकं समाश्रयेत्
अज्ञानस्यानुकूलं तु कर्म सर्वं परित्यजेत् ६५
सम्पूर्णज्ञानलाभाय वर्तन्ते भुवि ये जनाः
तेषां पापानि नश्यन्ति महान्ति सुबहूनि च ६६
ज्ञानादूर्ध्वं न कर्मास्ति शुभं वाऽशुभमेव वा
स्वस्वरूपातिरेकेण यद्यस्ति पशुरेव सः ६७
वस्तुगत्यात्मनः किञ्चित् पृथक् नास्त्येव योगिनः
तथाप्यस्तीव भातीव व्यवहारः प्रवर्तते ६८
यथा स्वफलमादाय प्रारब्धं कर्म सत्तम
तदा हि क्षुभितं भाति स्वात्मनोऽन्यतयाखिलम् ६९
यदा न क्षुभितं कर्म फलदानाय सत्तम
तदा स्वात्मातिरेकेण न किञ्चिदपि भासते ७०
स्वात्मनोऽन्यतया सर्वं पश्यन्नपि परात्मविद्
निर्भयः स्वात्मना सर्वं पश्यति स्वानुभूतितः ७१
स्वात्मनः परमव्याप्तिं पश्यतः स्वानुभूतितः
यथा भातेन रूपेण शिवो भाति यथाखिलम् ७२
तथा भातेन रूपेण स्वयं तिष्ठति केवलम्
स्वयं स्वानुभवेनैव शिवरूपेण केवलम् ७३
यदा तिष्ठति निर्वाणं तदा तस्य महात्मनः
महाव्यापकनिर्वाणस्वरूपे स्वात्मवस्तुनि ७४
स्वानुभूत्यैव विश्रान्तः स्वयं तु परदेवता
विश्रान्तिश्च महाक्षोभः प्रकाशाव्यभिचारतः ७५
प्रकाशरूपमेवेति तदा पश्यति तत्त्ववित्
सर्वं मायामयं साक्षादात्मा सर्वावभासकः ७६
इत्यात्मानं विजानाति यः स ब्रह्मविदेव वै
दृश्यरूपमिदं सर्वं दृङ्मयं यः प्रपश्यति ७७

अकर्तात्मस्वरूपेण स तु ब्रह्मविदुत्तमः
दर्शनादर्शने हित्वा स्वयं केवलरूपतः ७८
यस्तिष्ठति स तु ब्रह्मन् ब्रह्म न ब्रह्मवित्स्वयम्
एवं रूप तु विज्ञानं यस्य मर्त्यस्य सिध्यति ७९
न तस्य पुरयपापाभ्यां लेपः कर्म न विद्यते
एकैकस्य तु पापस्य प्रायश्चित्तं प्रकीर्तितम् ८०
एकैकशो मुने कर्तुं महतामपि दुःशकम्
इदमद्वैतविज्ञानमेकमेवैनसां मुने ८१
परोक्षमपरोक्षं वा साक्षादुन्मूलनक्षमम्
नास्ति ज्ञानसमं किञ्चित् प्रायश्चित्तं श्रुतौ स्मृतौ ८२
नाधिकं चेत्ततः साक्षाज्ज्ञानमेव समाश्रयेत्
नास्ति नास्ति समं किञ्चिद् विज्ञानं श्रद्धयाऽपि च ८३
किं पुनर्ब्रह्मविज्ञानसमं ब्रूहि मुनीश्वर ८४
अतश्च संक्षेपमहं वदामि
सर्वस्य पापस्य सहेतुकस्य
विशुद्धविज्ञानमिदं निवर्तकं
ततश्च सत्केवलमेकमाश्रयेत् ८५
विशुद्धविज्ञानमिदं समाश्रितः
श्रुतिप्रसादेन च पुरयकर्मणा
गुरुप्रसादेन च दुःखमागतं
शिवप्रसादेन तरत्यसंशयम् ८६
शोकमोहसुखदुःखसागरं
वेद जन्म विमलात्मवेदनम्
अन्तरेण मनुजः कथं तरत्याशु
केन वद विप्र मेऽधुना ८७
सर्वमेतदखिलेश्वरः शिवः
केशवादिसुरनायका अपि
त्वं च तद्वदहमित्यहो परब्रह्म-
तत्त्वविषया मतिः परा ८८
शङ्करो हि शुक भासते सदा

बन्धमुक्तिगुरुशिष्यरूपतः
दृश्यरूपजगदात्मना तथा
सत्यमेव कथितं मया तव  ८९
ब्रह्मतत्त्वविषया मतिः परा
कर्मवृन्दवडवा न संशयः
वेदचक्षुरत एव मानवः
सद्य एव मतिमाश्रयेदिमाम्  ९०
न हि वक्तव्यमितः परं तव
श्रुतिसारः कथितस्तु ते मया
शिवपादस्मरणेन केवलं
परविद्याऽनघ ते भविष्यति  ९१

इत्युपपुराणे पाराशरे चतुर्दशोऽध्यायः  १४

## अथ पञ्चदशोऽध्यायः

श्रीपराशर उवाच
भूयोऽपि सर्वपापानां प्रायश्चित्तमनुत्तमम्
वदामि सर्वजन्तूनां हिताय करुणाबलात्  १
देवी पुरा शिवं देवं सर्वज्ञं करुणाकरम्
प्रणम्य लोकरक्षार्थमपृच्छदिदमुत्तमम्  २
भगवानपि सर्वज्ञः संसारोदधितारकः
आम्नायान्तैकसंवेद्यः प्राह देव्यै प्रियेण तु  ३
ईश्वर उवाच
शृणु गुह्यतमं देवि मया नोक्तमितः पुरा
संसारविषवृक्षस्य कुठारमिदमुत्तमम्  ४
अविमुक्तमितिख्यातं क्षेत्रमस्ति ममालयम्
संसारविषदष्टानामगतीनां महौषधम्  ५
अधिभूते तथाध्यात्मे अधिदैवे च संस्थितम्
पापानामपि सर्वेषां भवानि विनिवर्तकम्  ६
अधिभूते स्थितो मायी यस्तु ब्रह्माण्डविग्रहः
विराडात्मा भ्रुवोर्मध्ये सुस्थितं तस्य सुव्रते  ७

जीवानां व्यष्टिभूतानां सर्वेषां तदतन्द्रिते
अधिभूततया प्रोक्तं तस्याध्यात्मिकमेव वै ८
अधिदैवतया प्रोक्तमविमुक्तं तदास्तिके
मम प्रियतमं विद्धि विशेषेणाघनाशनम् ९
तत्क्षेत्रसेवयैवाशु लभते मामयं नरः
सर्वपापविनिर्मुक्तो भवेच्च मनुजः शिवे १०
कुरुक्षेत्रं प्रसिद्धं यद्भूम्यां पापनिवर्तकम्
तदाश्रयफलं चापि लभतेऽस्यैव सेवया ११
देवानां देवयजनं प्रसिद्धं यन्महेश्वरि
सर्वेषामपि भूतानां तद्ब्रह्मसदनं परम् १२
अन्यच्च पापसङ्घातनिवर्तकतयैव तु
प्रसिद्धं सर्वलोकेषु स्थानं तीर्थं च यत् प्रिये १३
इदमेव हि तत्सर्वमविमुक्तं यदव्ययम्
अस्यैव सेवया तानि सेवितानि भवन्ति वै १४
अविमुक्तमिदं मुक्त्वा देशं संसारनाशनम्
नान्यत्र निवसेत् प्राज्ञः क्षणमात्रमपि प्रिये १५
अत्र भागीरथीतोये सकृत् स्नात्वा तु मानवः
दृष्ट्वा विश्वेश्वराख्यं मां करुणार्णवमम्बिके १६
उपोष्य दिनमेकं वा प्रदद्यात् किञ्चिदादरात्
ब्रह्महत्यादिकैः पापैर्मुच्यते सकलैरपि १७
अत्र भागीरथीतोये स्नात्वा मासमतन्द्रितः
बुद्धिपूर्वकृतैः पापैर्मुच्यते सकलैर्नरः १८
अत्र जप्तं हुतं दत्तं यत्किञ्चिदपरं कृतम्
अनन्तं तद्भवेत् सर्वं नात्र सन्देहकारणम् १९
अत्रैवोत्क्रममाणस्य जन्तुमात्रस्य केवलम्
वेदवेदान्तसारस्य प्रणवाख्यस्य पार्वति २०
ब्रह्मणस्त्वर्थभूतोऽहं संसारद्रावको विराट्
कृपया मामकं रूपं परिपूर्णं परामृतम् २१
आनन्दं सत्यचिद्रूपं तारकं तमसः परम्
स्वयं भातं निराधारं दास्यामि पृथगात्मना २२

येनैवाशु महद्दुःखं प्राणेशोऽयं महेश्वरि
परित्यज्य स्वसंसारं परानन्दो भवेत् स्वयम्  २३
मामृते रुद्रमोक्षार्थं जनानां पङ्कजेक्षणे
को वा संसारमग्नानां साक्षात् संसारमोचकः  २४
तस्मात् क्षेत्रस्य महतो मम विज्ञानजन्मनः
कारणत्वाच्च पापानां नाशकत्वात् तथैव च  २५
मुमुक्षुः श्रद्धया साकं इदमेवाविमुक्तिदम्
निषेवेत प्रयत्नेन विमुच्येत कदाचन  २६
अस्यैव वैभवं सर्वमादरेण बृहस्पतिः
याज्ञवल्क्याच्च सर्वज्ञाच्छ्रुत्वा विज्ञातवान् स्थिरम्  २७
बहवो वेदविद्वांसः श्रद्धयैवास्य वैभवम्
आचार्येभ्यः प्रिये श्रुत्वा विमुक्ता भववन्धनात्  २८
क्षेत्रस्यैवास्य माहात्म्यं मया वक्तुं न शक्यते
जाबालोपनिषत् साक्षात् स्वयं जानाति वा न वा  २९
तन्मूलानि पुराणानि वैभवं तस्य पार्वति
वदन्ति लोकरक्षार्थं महास्थानस्य वैभवम्  ३०
अविमुक्ताभिधे क्षेत्रे सेवाहीनो जनः प्रिये
अयत्नेनैव संसारात् सदा मुक्तो भविष्यति  ३१
अस्मिन् जन्मनि वा देवि तथा जमान्तरेषु वा
सकृत्क्षेत्रमिदं सेव्यं विज्ञानाय मनीषिभिः  ३२
विनास्य सेवया जन्तोर्विज्ञानं वेदसम्भवम्
न कस्यापि भवेत् सम्यक् सत्यमेव मयोदितम्  ३३
जन्मान्तरसहस्त्रेषु श्रद्धयैवार्जितैः प्रिये
पुण्यैर्हि ब्रह्मविज्ञानं जायते सर्वदेहिनाम्  ३४
एकैकस्मिन् गते जन्मन्यर्जितं पुण्यमादरात्
तिष्ठत्यात्मनि तत्सर्वं सर्वथा नैव नश्यति  ३५
अनेककोटिभिः कल्पैः क्रमेणैवार्जितैः शुभैः
कर्मभिः कालपाकेन ज्ञानं सम्यक् प्रजायते  ३६
अत्रैव मरणं सम्यक् यस्य सिध्यति देहिनः
विज्ञानसाधनं तेन सर्वं पूर्वमनुष्ठितम्  ३७

सेवयास्य विनश्यन्ति पापानि सकलानि तु
सेवयास्य समं नास्ति प्रायश्चित्तं न संशयः ३८
तस्मात् सर्वं परित्यज्य क्षेत्रमेतत्समाश्रयेत्
त्वया मया च देवेशि सेवितं हि महाप्रियम् ३९
यदेतत् क्षेत्रमध्यास्ते वरणानासि संज्ञितम्
स्थाने शास्त्रावसेयं तन्मदीयमविमुक्तकम् ४०
अविमुक्तमिदं स्थानं वरणानासि संज्ञितम्
यत्तद् ध्येयं विशेषेण यथेदमविमुक्तकम् ४१
अविमुक्ताश्रयं साम्बं ध्यायिनामखिलात्मनाम्
पुरुषा वशमायान्ति निवृत्तविषयाः शिवे ४२
नश्यन्ति सर्वपापानि ध्यायिनामस्य पार्वति
तेनैवावयवेनेदं वरणानासिसंज्ञितम् ४३
वरणानासि यत्स्थानं तत्स्थानं सर्वदेहिनाम्
भ्रुवोर्घ्राणस्य यः सन्धिस्तस्मिन्नेव प्रतिष्ठितम् ४४
वरणानासिसंज्ञेस्मिन् स्थानं यत् सुप्रतिष्ठितम्
मदीयमविमुक्तं तच्चिन्तनीयं मुमुक्षुभिः ४५
केवलं चिन्तनेनैव क्षेत्रस्यैवास्य मे प्रिये
पापानि सर्वजन्तूनां क्षिप्रं नश्यन्त्यसंशयम् ४६
अविमुक्तं यदध्यात्मं मदीयं क्षेत्रमुत्तमम्
अत्राहं देवि सुप्रीतस्त्वया सन्निहितः सदा ४७
अतः पापविशुद्ध्यर्थं मम ज्ञानस्य सिद्धये
अत्र मामादरेणैव ध्यायेन्नित्यमतन्द्रितः ४८
अर्धयामं मुहूर्तं वा मामत्रैव विचिन्तयेत्
पापानामपि सर्वेषां प्रायश्चित्तमिदं भवेत् ४९
प्रायश्चित्तेषु सर्वेषु ध्यानमेतद्विशिष्यते
अतः सर्वं परित्यज्य ध्यानमेतत् सदाभ्यसेत् ५०
पुराऽत्रिः श्रद्धया सार्धं पूर्वपुण्यबलेन तु
याज्ञवल्क्यं मुनिश्रेष्ठमपृच्छद् ज्ञानसाधनम् ५१
योगीश्वरो मुनिश्रेष्ठः साक्षाद् विज्ञानसिद्धये
मामुपास्यतया प्राह क्षेत्रेऽस्मिन्नविमुक्तके ५२

अन्ये च योगिनोऽध्यात्म्ये भ्रुवोर्घ्राणस्य मध्यमे
प्रकाशमण्डलं शुद्धं वरणानासिकाभिधम्  ५३
केवलं भावनागम्यमुपदिश्य सुलोचने
तदग्रे मामकं क्षेत्रमविमुक्तसमाह्वयम्  ५४
ॐ कारहृदयं सूक्ष्ममुपदिश्य सुलोचने
तदग्रे मामनाद्यन्तमसक्तं सर्ववस्तुभिः  ५५
सत्यं चैतन्यसम्पूर्णं सुखलक्षणमम्बिके
समस्तजगदुत्पत्तिस्थितिसंहारकारणम्  ५६
त्वया सहितमाम्नायवचसामप्यगोचरम्
शुद्धस्फटिकसङ्काशं सोमार्धकृतशेखरम्  ५७
त्रिनेत्रं चारुमुकुटं सुसम्पूर्णं शुचिस्मितम्
वरदाभयहस्ताभ्यां कालदण्डेन चाम्बिके  ५८
व्याघ्रचर्माम्बरेणापि विचित्राभरणेन च
उपवीतेन शुद्धेन शोभमानमतिप्रभुम्  ५९
गुणाभिमानिभिर्देवैर्ब्रह्मविष्णुमहेश्वरैः
उपास्यमानमोमर्थमुपास्यत्वविवर्जितम्  ६०
स्वात्मभूतपरानन्दप्रकाशैकसुखस्थितम्
मोक्षसाधनविज्ञानसाधनत्वेन केवलम्  ६१
प्राहुः सर्वमुमुक्षूणामुपास्यत्वेन केवलम्
अन्ये चैश्वर्यसिध्यर्थं ऐश्वर्यासक्तचेतसः  ६२
आहुरन्ये मुनिश्रेष्ठाः क्रममुक्तेस्तु साधनम्
अत्राचार्योपदेशेन ये जना मामुपासते  ६३
तेषां नित्याभियुक्तानां दास्यामि ज्ञानमुत्तमम्
भ्रुवोर्घ्राणस्य यः सन्धिस्तं धियामरनासिके  ६४
द्युलोकस्य परस्यापि सन्धिरित्यपि भावेयेत्
सन्धिसंज्ञे च मामेवं सन्धिभूतमुपासते  ६५
पूर्वेऽपि ब्रह्मविद्वांसो ध्यायन्तस्तत्र सादरम्
मुमुक्षुभिर्मर्त्यजनैर्वाराणस्यां दिने दिने  ६६
अविमुक्ते विमुक्त्यर्थमुपास्योऽहं त्वया सह
अत्राविमुक्ते कल्याणि सदा सन्निहितस्त्वहम्  ६७

तेनाविमुक्तसंज्ञात्र यो मामस्मिन्निरन्तरम्
उपास्ते प्रीतिसंयुक्तस्तस्मै दास्यामि सुन्दरि ६८
ज्ञानं मद्विषयं साक्षादविमुक्तसमाह्वयम्
अत्र मामादरेणैव यजन्तः पर्युपासते ६९
सकृद्वापि प्रिये ते तु सर्वदा मामुपासते
मूढानामपि मुक्त्यर्थं मामुपास्यतयैव तु ७०
आमनन्ति मुदा भद्रे सदा जाबालशाखिनः
जाबालोपनिषत्साध्व मम ज्ञानस्य सिद्धये ७१
प्रधानसाधनान्याह प्राणिनामादरेण तु
अविमुक्तं मम क्षेत्रं मन्नाम परमं शुभम् ७२
शतरुद्रीयसंज्ञं च तथा संन्यासमुत्तमम्
भस्मनोद्धूलनं तद्वत् त्रिपुण्ड्रस्य च धारणम् ७३
रुद्राक्षधारणं साक्षाच्छिवशब्दजपस्तथा
भस्मसम्पादनं ध्यानं ममैव परमस्य तु ७४
एतान्याह प्रधानानि साधनानि प्रियेण तु
एतत्सर्वं समाख्यातं मम विज्ञानसिद्धये ७५
एषु धर्मेषु यः श्रद्धां नित्यं कुर्याद् द्विजोत्तमः
अचिराल्लभते ज्ञानं संसारच्छेदकारणम् ७६
एषु धर्मेषु यो धर्मो विकलो यस्य धर्मिणः
न तस्य ब्रह्मविज्ञानं जायते न हि संशयः ७७
एषु धर्मेषु वै कस्मिन्निरतो यस्तु मानवः
न तस्य सर्वपापानां प्रायश्चित्तं भवेत् प्रिये
अतः सर्वप्रयत्नेन सर्वपापनिवृत्तये
एषु धर्मेषु चैकं वा साधयेदप्रमादतः ७९
अथवा सर्वपापानां प्रायश्चित्तं तथैव तु
पुण्डरीकपुरं पुण्यं पुराणामुत्तमोत्तमम् ८०
दर्शनादेव सर्वेषां विमुक्तिफलकारणम्
आश्रयेदादरेणैव यत्र मे नर्तनं परम् ८१
अथवा सर्वपापानां प्रायश्चित्तं तथैव तु
सुवर्णमुखरीतोये पवित्रे पापनाशने ८२

श्रीकालहस्तिसंज्ञे मां पर्वते परया मुदा
दृष्ट्वा स्वर्णमथान्यद्वा प्रदद्याद् ब्राह्मणाय वै ८३
अथवा सर्वपापानां प्रायश्चित्तं तथैव तु
सेतुबन्धे महातीर्थे गन्धमादनपर्वते ८४
यत्र रामस्तु कल्याणि साक्षाद् दाशरथिः शुभः
निहत्य रावणं मूर्खं तत्पापविनिवृत्तये ८५
स्थापयामास मल्लिङ्गं स्वनाम्ना देवनायकम्
तत्र स्नात्वा यथाशक्ति धनं दत्वा तु पर्वणि ८६
तं मां दृष्ट्वा महादेवं लिङ्गस्थं करुणाकरम्
प्रदक्षिणां नमस्कारं प्रकुर्यात् परमास्तिकः ८७
अथवा सर्वपापानां प्रायश्चित्तं तथैव तु
ज्ञानिनं पूजयेद् भक्त्या धनेन स्वात्मनैव च ८८
यत्र साक्षाच्छिवो ज्ञानी वर्तते प्रीतिसंयुतः
तत्राहं प्रीतिसंयुक्तः सदा सन्निहितः प्रिये ८९
सर्वं त्यक्त्वा यथा ज्ञानी मामेकं लब्धवान् प्रिये
सर्वं त्यक्त्वा तथाहं च तमेकं लब्धवान् मुदा ९०
वर्तते यत्र विज्ञानी त्यक्त्वा शेषक्रियः सदा
तत्र तीर्थानि वर्तन्ते सफलं तस्य जीवितम् ९१
विशुद्धज्ञाननिष्ठस्य कौपीनाच्छादनादिकम्
यो ददाति वशस्तस्य त्वयैव सह पार्वति ९२
ज्ञानिनस्तस्य शुश्रूषुरतीव मम वल्लभः
तस्माद् ज्ञानैकनिष्ठस्य कुर्याच्छुश्रूषणं बुधः ९३
श्रीपराशर उवाच
एवमुक्त्वा महादेवो महादेव्यै सनातनः
हिताय सर्वलोकानामालिलिङ्गे महेश्वरीम् ९४
देवी सकललोकानामखिलानन्ददायिनी
आलिलिङ्ग महादेवमतीव परया मुदा ९५
यदुक्तं देवदेवेन जनानां हितकाम्यया
प्रायश्चित्तं तु पापानां तदेव कथितं मया ९६
प्रायश्चित्तविहीनस्य पापाचाररतस्य तु

फलभोगाय पापानां नरकानसृजच्छिवः ९७
नरके दुःखभोगार्थं शरीरं यातनामयम्
शिवेनोत्पाद्यते जन्तोर्नास्तिकस्य दुरात्मनः ९८
विना नरकभोगेन विवशो जायते नरः
श्वसूकरखरोष्ट्राश्वमृगसर्पादियोनिषु ९९
तत्र तत्र महादुःखमप्रसह्यमनेकशः
भुंक्ते यथात्मलेपेन नरः प्रत्यक्षमेव तत् १००
अवश्यमनुभोक्तव्यं पापानां फलमास्तिक
प्रायश्चित्तविहीनेन प्रायश्चित्तमतश्चरेत् १०१
सर्वमुक्तं समासेन प्रायश्चित्तं शुकानघ
श्रद्दधानस्य दातव्यं न देयं यस्य कस्यचित् १०२
इत्युपपुराणे पाराशरे पञ्चदशोऽध्यायः १५

अथ षोडशोऽध्यायः

श्रीपराशर उवाच
अथ पूजाविधिं वक्ष्ये शिवस्य परमात्मनः
सर्वकारणभूतस्य त्रिमूर्तीनां परस्य तु १
परिपूर्णस्य रुद्रस्य जगतः कारणस्य तु
सच्चिदानन्दरूपस्य पूजा ज्ञानं हि केवलम् २
ज्ञानप्रदा परा पूजा नास्तिकस्य न सा भवेत्
आस्तिकस्यापि रुद्रस्य प्रसादेनैव सिद्ध्यति ३
प्रसादलभ्या सा पूजा पवित्रा पापनाशिनी
परानन्दप्रदा पूजा योगिनां सार्वकालिकी ४
आवाहनविनिर्मुक्ता विसर्जनविवर्जिता
क्रियाकलापनिर्मुक्ता कर्तृतारहिताफला ५
योगिनामात्मसंवेद्या विश्वविश्रान्तिरूपिणी
विश्वस्योल्लासविश्रान्तिर्विलासरसनोदिता ६
महती देवपूजा सा सदा सा योगिनां खलु
प्रमाता च प्रमाणं च प्रमेयं प्रमितिः परा ७
चिदेवेति परिज्ञानं पूजैषा परमात्मनः

विग्रहं देवदेवस्य विश्वमेतच्चराचरम् ८
इति ज्ञानं परा पूजा शिवस्य महती हि सा
योगिनामेव सा पूजा महती हि सुमङ्गला ९
अयोगी तत्प्रसिध्यर्थं कुर्याल्लिङ्गे शिवार्चनम्
सर्वकर्माणि शुद्धानि ज्ञानस्योत्पादकानि वै १०
ज्ञाने जाते क्रियाः सर्वा विनश्यन्ति न संशयः
पूजया परमा मुक्तिः पूजया शुद्धवेदनम् ११
ब्रह्मविष्णवादिदेवानां पदप्राप्तिश्च पूजया
अष्टैश्वर्यं सुरत्वं च पदं गान्धर्वपूर्वकम् १२
सार्वभौमत्वमीशस्य पूजयैव हि सिद्ध्यति
मनोहराः स्त्रियः सौख्यं कल्याणभवनानि च १३
अपर्यन्तधनं वापि पूजया शूलिनः खलु
पूजा लिङ्गे महेशस्य पुरुषार्थचतुष्टयम् १४
ददाति सर्वजन्तूनामचिरादेव सत्तम
रौद्रं लिङ्गं महाविष्णुर्भक्त्या शुद्धं शिलामयम् १५
चारुचित्रं समभ्यर्च्य लब्धवान् परमं पदम्
या च लक्ष्मीः समाख्याता महाविष्णोश्च वल्लभा १६
यस्य लिङ्गं समभ्यर्च्य संपूज्यः सर्वचेतनैः
ब्रह्मा सर्वजगत्कर्ता यस्य लिङ्गार्चनेन तु १७
भारतीं प्राप्तवानाशु स पूज्यः सर्वचेतनैः
यस्य लिङ्गं समभ्यर्च्य स्वभर्तुर्वल्लभाऽभवत् १८
शची देवी स्त्रियश्चान्याः स पूज्यः सर्वचेतनैः
यस्य लिङ्गं समभ्यर्च्य मरुतः सकला अपि १९
लब्धवन्तः श्रियं पूर्णां स पूज्यः सर्वचेतनैः
यस्येन्द्रियाणि पूजार्थे भवन्ति शुभदेहिनः २०
कदाचिदपि वा विप्र सफलं तस्य जीवितम्
एककालं द्विकालं वा त्रिकालमथवा नरः २१
लिङ्गे दिने दिने देवं पूजयेदादरेण तु
आसनावाहने चार्घ्यपाद्यमाचमनं तथा २२
स्नानं वासोपवीतं च भूषणानि च सर्वशः

गन्धं पुष्पं तथा धूपं दीपमन्नेन तर्पणम्  २३
माल्यानुलेपनं चैव नमस्कारो विसर्जनम्
एवं पूजाक्रमः प्रोक्तः समासेन मया तव  २४
विस्तरेण मया वक्तुं न शक्यं कल्पकोटिभिः
प्रणवेनैव मन्त्रेण सर्वं कुर्यादतन्द्रितः  २५
प्रणवः सर्वमन्त्राणां खलु कंदं सनातनम्
श्रीमत्पञ्चाक्षरेणैव सतारेणाथवा मुदा  २६
पूजयेद्देवदेवेशं लिङ्गेऽभीष्टार्थसिद्धये
त्रियम्बकेन मन्त्रेण श्रौतैरन्यैरथापि वा  २७
लिङ्गे दिने दिने देवं पूजयेदादरेण तु
प्रतिष्ठितानि लिङ्गानि पर्वतेषु वनेषु च  २८
नदीतीरेषु वान्यत्र मनुष्यैर्मुनिभिः सुरैः
यक्षराक्षसगन्धर्वसिद्धविद्याधरादिभिः  २९
तिर्यक् जातिषु जातैश्च तथान्यैरपि जन्तुभिः
यानि तानि महाप्रीत्या ब्राह्मणो वाऽथवा परः  ३०
प्रदक्षिणत्रयं कुर्यात् प्रकृत्या प्रणतिं भुवि
सापि पूजा हि कल्याणि सर्वदोषविवर्जिता  ३१
अयत्नलभ्या सर्वेषां भुक्तिमुक्तिफलप्रदा
अग्निहोत्रादिमध्ये वा मण्डले सूर्यसोमयोः  ३२
हृदये ब्रह्मरन्ध्रे वा पूजयेदीश्वरेश्वरम्
अन्तरिच्छन्ति ये रुद्रं सदा वन्द्यं मनीषया  ३३
गृह्णन्ति जिह्वया सोमं रसपूर्णामृतोदकम्
अन्तर्नेच्छन्ति ये रुद्रं भवानीसहितं भवम्  ३४
पुरीषमेव गृह्णन्ति जिह्वया ते न संशयः
भवानीसहितं ध्यानं लिङ्गे रुद्रस्य पूजनम्  ३५
वाराणस्यां स्थितिर्भक्तिर्नाल्पस्य तपसः फलम्
श्रीमद्व्याघ्रपुरे पुण्ये वर्तनं परया मुदा  ३६
कालहस्तिगिरौ वापि नाल्पस्य तपसः फलम्
शिवशङ्कररुद्रादिनामानि परमात्मनः  ३७
साम्बमूर्तिस्त्रिनेत्रा या सा परस्य परात्मनः

साक्षान्मूर्तिरितिज्ञानं नाल्पस्य तपसः फलम् ३८
नामानीति परिज्ञानं नाल्पस्य तपसः फलम्
नारायणादिनामानि न साक्षात् परमात्मनः ३९
नामानीति परिज्ञानं नाल्पस्य तपसः फलम्
एकस्य देवदेवस्य ब्रह्मविष्णुमहेश्वराः ४०
अंशभूता इति ज्ञानं नाल्पस्य तपसः फलम्
अंशभूता अमी जीवैः शिवप्राप्त्यर्थमादरात् ४१
उपास्या इति विज्ञानं नाल्पस्य तपसः फलम्
बहुनात्र किमुक्तेन शिवः पूज्यः परात्परः ४२
यथाधिकारं विप्राद्यैर्ज्ञानेन क्रिययाऽथवा ४३
इत्युपपुराणे पाराशरे षोडशोऽध्यायः १६

## अथ सप्तदशोऽध्यायः

श्रीपराशर उवाच
अथ साक्षात्परं तत्त्वं समस्तजगदाश्रयम्
समासेन प्रवक्ष्यामि श्रुणु तत् श्रद्धया सह १
दृश्यं जगदिदं सर्वं शुक्तिकारजतादिवत्
अज्ञानेनैव कस्मिश्चित् कल्पितं नैव वस्तुतः २
कल्पितस्य समस्तस्य यदधिष्ठानमास्तिक
तत्कल्पितपदार्थेन भिन्नलक्षणमेव हि ३
अधिष्ठानमसत्यस्य सत्यमेव न संशयः
शुक्तिका व्यवहारे तु सती न रजतोपमा ४
केवलं सत्यता शुक्तौ दृष्टान्तत्वेन गृह्यते
न व्यवहारिकत्वं च सत्यत्वं नास्ति हेतुजम् ५
सर्वसाक्षिस्वरूपस्य प्रागभावाद्यसम्भवात्
जन्मनाशाद्यभावेन सदा सत्यं परं पदम् ६
कल्पितस्य समस्तस्य भासकत्वात् स्वयं प्रभम्
स्वयं प्रकाशं चैतन्यं तद्धि सर्वावभासकम् ७
यस्य शेषतया सर्वमिदं प्रेमास्पदं भवेत्
शेषिरूपं च तत्साक्षात् सुखवत् सुखमेव हि ८

ब्रह्मणः शेषभूतं हि जगत् सर्वं चराचरम्
अतः शेषपरं तत्त्वं परानन्दस्वलक्षणम् ९
सत्तया च प्रकाशेन प्रियेण च परं पदम्
इदं सर्वं जगद् व्याप्तं शुक तिष्ठति हि स्थिरम् १०
वस्तुगत्या जगत्तेन विना नैव प्रतीयते
सद्भावो जगतस्तस्मादनन्तं हि परं पदम् ११
सत्यं ज्ञानं सुखं वापि स्वरूपं परवस्तुनः
न धर्मो भेदशून्यत्वाद् वस्तुनो धर्मधर्मिणः १२
धर्मिणो धर्मधर्मित्वं खलु लोके प्रतीयते
नैव भेदस्तयोरस्ति भेदस्यैवानिरूपणात् १३
ययोर्भेदस्तयोर्भेदप्रकाशात् पूर्वमेव तु
विभेदेन प्रकाशः स्याद् भेदे भाते भिदा तयोः १४
द्वयोर्भेदो न चेत्तर्हि भेद एकस्य वस्तुनः
एकस्यैव च यः प्राप्तः स मृषा चन्द्रभेदवत् १५
तस्मात् सत्यचिदानन्दा गुणा न परवस्तुनः
स्वरूपमेव भेदस्तु तस्य मायाविजृम्भितः १६
मायामात्रमिदं द्वैतमद्वैतं परमार्थतः
इत्याह हि पुरा शुद्धा श्रुतिः सत्यार्थवादिनी १७
स्वतः प्रमाणभूतेन वेदेनैव प्रकाशितम्
यत्तदेव खलु प्राज्ञ सत्यं वस्तु न चापरम् १८
अतीन्द्रियार्थे धर्मे च तथाधर्मे परात्मनि
प्रमाणं वेद एवैकः खलु नान्यत् तपोधन १९
यदुक्तलक्षणं तत्त्वं तस्यासाधारणानि च
नामान्येतानि हे विप्र न ह्यन्यैस्तस्य सङ्गतिः २०
शिवः शम्भुः परं ब्रह्म सत्यमीशान ईश्वरः
एवमादीनि नामानि तानि रुढ्या परात्मनः २१
केचिद् रुढ्या च योगेन प्रवदन्ति महर्षयः
केचिद् रुढ्यैव योगेन नैव वाञ्छन्ति सत्तम २२
निर्विशेषं निरालम्बं निर्मलं निर्गतद्वयम्
स्वानुभूत्यैकसंसिद्धं कथं शब्दस्य गोचरम् २३

नारायणो हरिर्विष्णुर्मुकुन्दः केशवोऽच्युतः
एवमादीनि नामानि नैव तत्त्वपराणि वै २४
परतत्त्वोपदेशस्य सन्निधौ पठिता अमी
शब्दाः कथञ्चित् योगेन प्रवर्तन्ते न मुख्यतः २५
साक्षात् परतरस्यैव वस्तुतः सर्वसाक्षिणः
अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशिनी २६
तस्मात् साधारणी मूर्तिः साम्बा चन्द्रार्धशेखरा
नीलग्रीवा विरूपाक्षा ध्येया ब्रह्मादिभिः परैः २७
जगत् सृष्टौ स्थितौ देव्योमया पार्श्वस्थया सह
वर्तते सा परा मूर्तिः संहारे केवला भवेत् २८
मूर्तिं परां च गृह्णाति लोकानां हितकाम्यया
ब्रह्मविष्णवादयो देवास्तां ध्यायन्ति निरन्तरम् २९
विग्रहः सम्प्रदानं च युगपत् कर्मसन्निधिः
देवादीनां च विद्यन्ते विग्रहादीनि पञ्च च ३०
प्रीतिः फलप्रदत्वं च विद्यते परमात्मनः
ब्रह्मविष्णुमहेशानां तदंशानां तथैव च ३१
शिवस्य परतत्त्वस्य स्वभावः सकलं शुक
तदधीनं सदान्येषामिति तत्त्वविदां स्थितिः ३२
साक्षात् परतरं तत्त्वं स्वभावादेव निर्मलम्
उत्पत्त्यादिविनिर्मुक्तं स्वतन्त्रं पूर्णमद्वयम् ३३
प्रकृतिप्राकृतातीतं लक्ष्यलक्षणवर्जितम्
बन्धमोक्षविनिर्मुक्तं बन्धमोक्षविधायकम् ३४
स्वात्मभूतपरानन्दपरशक्तिसमन्वितम्
पराहृतानुसन्धानं परमक्रीडयान्वितम् ३५
कालातीतं कलातीतं कालकग्रासवर्जितम्
अनन्तमखिलाधारमपरिच्छिन्नवैभवम् ३६
परतत्त्वानुसन्धानं परमक्रीडयापि च
विद्या वेद्याखिलोल्लासविलसत्परिबृंहितम् ३७
तद्विदित्वा विमुच्यन्ते देशिकानुग्रहेण च
प्रसादेन च रुद्रस्य भवानीसहितस्य तु ३८

अतः सकलजन्तूनां तदेव परमं पदम्
वेदितव्यं विशेषेण विद्यया हि परा गतिः ३९
मूर्तिः परतरा ध्येया विमुक्त्यर्थं मुमुक्षुभिः
मूर्तिं ध्यानं विना विद्या परा नैव विजायते ४०
निष्कले तु परे तत्त्वे निरालम्बे निरञ्जने
किं करोति जनः क्षुद्रस्ततस्तां नित्यमाश्रयेत् ४१
ज्ञानावलम्बनभ्रान्त्या मनुष्या मन्दबुद्धयः
मूर्त्युपेक्षां प्रकुर्वन्ति ज्ञानं तेषां न जायते ४२
साधनानि परित्यज्य फलमिच्छन्ति ये जनाः
भोजनेन विना तेषां क्षुन्निवृत्तिर्भविष्यति ४३
अतो वेदनपर्यन्तं भक्तिध्यानजपार्चनम्
अन्यच्च वेदसंसिद्धं प्रकुर्यादास्तिको जनः ४४
मम हृदि निहितं तवातिगुप्तं
शुक कथितम् करुणाबलेन सिद्धम्
श्रुतिरपि परमा शिवं पुराणं
परमहरिप्रमुखा इदं वदन्ति ४५
इत्युपपुराणे पाराशरे सप्तदशोऽध्यायः १७

## अथ अष्टादशोऽध्यायः

श्रीपराशर उवाच
अथ शास्त्रार्थसंक्षेपं प्रवक्ष्यामि समासतः
मुमुक्षुभिर्महाप्राज्ञैर्वेदितव्यो विशेषतः १
शासनाच्छंसनाच्चैव शास्त्रमित्युच्यते बुधैः
शासनं द्विविधं प्रोक्तं शास्त्रलक्षणवेदिभिः २
तत्रैकं विधिरूपेण तदन्यत् प्रतिषेधतः
शंसनं भूतवस्त्वेकविषयं न क्रियापरम् ३
विधिरूपस्य शास्त्रस्य प्रतिषेधात्मकस्य च
केवलं भूतवस्त्वेकविषयस्य तथैव च ४
अज्ञोऽधिकारी न प्राज्ञो नैवात्मा नैव विग्रहः
चातुर्वर्ण्यं समालंब्य कश्चिदाश्रममास्तिक ५

वयोविशेषमालंब्य तथावस्थान्तरं परम्
विशेषालम्बनं शास्त्रं विशेषे सति सत्तम ६
प्रवर्तते स्वभावेन तस्यास्ति न निवर्तकम्
वर्णाश्रमवयोऽवस्थाविशेषाध्यासवर्जितः ७
ब्रह्मवित् सकलं शास्त्रं कटाक्षेणापि नेक्षते
देहावलम्बनेनैव केवलं न प्रवर्तते ८
शास्त्र नश्यति देहोऽत्र फलमन्यत्र हीरितम्
केवलात्मानमालंब्य मुने शास्त्रं न किञ्चन ९
प्रवर्तते ततो देहादन्योऽज्ञो भ्रान्तिमाश्रितः
आत्मा शास्त्राधिकारी स्यात् स हि संसारविभ्रमात् १०
तस्मिन्नात्मनि मोहेन बन्धमोक्षौ प्रकल्पितौ
शास्त्रमापाततो भाति मुने बहुमुखं नृणाम् ११
निरूपिते तु न्यायेन विभात्येकमुखं पुनः
शास्त्रनिर्णायकं न्यायकलापं मुनिसत्तम १२
सूत्ररूपेण कुर्वन्ति शिवस्यैवाज्ञयैव तु
अल्पाक्षरमसन्दिन्धं सारवद् विश्वतो मुखम् १३
अस्तोभमनवद्यं च सूत्रं सूत्रविदो विदुः
मुनयश्च मनुष्याश्च प्रसादादेव शूलिनः १४
सूत्रार्थं भाष्यरूपेण यथावद् दर्शयन्ति च
सूत्रार्थो वर्ण्यते यत्र वाक्यैः सूत्रानुकारिभिः १५
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः
प्रसादादेव रुद्रस्य भवानीसहितस्य तु १६
कुर्वन्ति केचिद् व्याख्यानं भाष्यस्यैव तपोबलात्
पदच्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना १७
आक्षेपस्य समाधानं व्याख्यानं पञ्चलक्षणम्
केचिद्वार्तिकरूपेण भाष्यार्थं कथयन्ति च १८
प्रासादादेव रुद्रस्य पूर्वे पूर्वतपोबलात्
उक्तानुक्तदुरुक्तानां चिन्ता यत्र प्रवर्तते १९
तं ग्रन्थं वार्तिकं प्राहुः वार्तिकज्ञा मनीषिणः
स्वबुद्ध्यधीनं भाष्यार्थं सङ्ग्रहेणैव चाथवा २०

विस्तरेण प्रकुर्वन्ति केचित् प्रकरणात्मना
शास्त्रैकदेशसम्बद्धं शास्त्रकार्यान्तरे स्थितम्  २१
आहुः प्रकरणं नाम शास्त्रभेदविचक्षणाः
सूत्रभाष्यादिभिः शास्त्रं साक्षाद्वेदनसाधनम्  २२
श्रोतव्यं स्वगुरोः स्वात्मस्वरूपप्रतिपत्तये
आत्मलाभात् परं नास्ति किञ्चिन्मात्रमपि द्विज  २३
अतः स्वात्मानमीशानं लभते स्वात्मना स्वयम्
लब्धस्य लाभो लब्धः स्यादलब्धस्य तथैव हि  २४
द्विधा लाभः स्वकं रूपं तत्र लब्धं हि सन्ततम्
लब्धस्यालब्धताज्ञानाल्लाभस्तस्यैव वेदनात्  २५
आत्मलाभः स्वतः स्वात्मवेदनोत्पत्तिरेव हि
स्वात्मलाभनिमित्तं यद् बन्धनं पुरुषस्य तत्  २६
स्वात्मलाभेन नष्टं स्यात् स्वात्ममात्रतयैव तु
स्वात्ममात्रतया नष्टं स्वात्मनो नैव बन्धनम्  २७
अस्ति स्वात्मैव नैवान्यद् वस्तुतत्त्वनिरूपणे
व्यावहारिकदृष्ट्यैव विभाति स्वात्मनः पृथक्  २८
समस्तं व्याप्तभावत्वाद् भावः स्वात्मैव केवलम्
स्वस्वरूपस्य लाभेन स्वात्मानन्दो महत्तमः  २९
अपरोक्षतया भाति सा परा मुक्तिरात्मनः
आत्मा नाम जडस्यास्य प्रकाशस्य प्रकाशकः  ३०
स्वयंज्योतिः सदानन्दः सत्यः सम्पूर्णलक्षणः
अस्यैवोपाधिभेदेन विभेदः कल्पितः स्वयम्  ३१
नैव स्वाभाविको भेदो यतो दृष्टः स आत्मना
दृश्यभूतस्तु नैल्यादिधर्मो दृश्यस्य हि द्विज  ३२
यथा न दृष्टः धर्मः स्यात् स तु लोके व्यवस्थितः
एवं भेदोऽपि दृश्यत्वात् दृश्यधर्मो न संशयः  ३३
दृष्टधर्मो न दृश्यः स्याद् दृष्टबोधो यथा तथा
दृष्टबोधोऽपि दृश्यश्चेद् दृष्टतैव न सिध्यति  ३४
विरुद्धं रूपमेकस्य सर्वथा घटते न हि
दृष्टभेदो न भातश्चेदभेदः सत्य एव हि  ३५

दृष्टाभेदो न चेद् भेदः तदा नैव हि सिध्यति
अभेदो यस्य सत्यः स्यात् स तु भेदस्तु नैल्यवत्  ३६
दृश्यधर्मो न दृक् धर्मः तस्मादात्माद्वयः सदा
औपाधिकेन भेदेन भिन्नमेव परं पदम्  ३७
जीव ईश्वर इत्यादिविशेषः प्रतिरूपभाक्
जीवः संसारदोषेण दुष्टवत् प्रतिभासते  ३८
व्यवहारदशायां तु न दुष्टः परमार्थतः
व्यवहारदशायां च न दुष्टः परमेश्वरः  ३९
यथाकाशस्थितः सूर्यश्चलनादिविवर्जितः
सूर्यः एकः शरावादिपात्रस्थेषूदकेषु हि  ४०
भिन्नवद् भाति जीवानां तथा भेदः प्रकल्पितः
अर्कस्य प्रतिबिम्बं हि चलतीव प्रकाशते  ४१
संसारीव तथा भाति जीव एव न चेश्वरः
लेपश्च पुण्यपापाभ्यां जन्मना शौच दुःखितः  ४२
जीवस्यैव न देवस्य बिम्बभूतस्य सत्तम
बिम्बत्वं प्रतिबिम्बत्वं यथा पूषणि कल्पितम्  ४३
ईश्वरत्वं च जीवत्वं तथात्मनि न संशयः
विनष्टे जलपात्रे तु यथादित्यस्य नश्यति  ४४
बिम्बत्वं प्रतिबिम्बत्वमुभयत्वं तथैव तु
अज्ञानोपाधिनाशे तु नश्यत्येव परात्मनः  ४५
ईश्वरत्वं च जीवत्वमुभयत्वं न संशयः
बिम्बत्वादिविनिर्मुक्तः स्वस्वरूपेण भास्करः  ४६
यथा दीपः स्थितः शुद्धस्तथैवात्मापि केवलः
ईश्वरत्वादिनिर्मुक्तः आत्मा यः परमः स्वयम्  ४७
सत्यानन्दचिदानन्दस्वरूपेणावशिष्यते
प्रतिबिम्बादपि श्रेष्ठो बिम्बभूतो हि भास्करः  ४८
ततोऽपि भगवान् भानुर्विशिष्टः केवलस्तथा
ईश्वरः सर्वजीवेभ्यो विशिष्टः केवलस्ततः  ४९
विशिष्टः सच्चिदानन्दः साक्षी साक्ष्यविवर्जितः
बिम्बभूतस्य सूर्यस्य प्रतिबिम्बमपेक्ष्य तु  ५०

वैशिष्ट्यमपि वैशिष्ट्यं स्वभावः केवलस्य हि
अपेक्ष्य जीवमीशस्य वैशिष्ट्यमपि साक्षिणः ५१
केवलस्य तु वैशिष्ट्यं स्वभावस्तद्वदेव हि
साक्ष्यापेक्षं च साक्षित्वं साक्ष्याभावेऽपगच्छति ५२
स्वाभाविकं तु साक्षित्वं कदाचिन्नापि गच्छति
भास्यापेक्ष्यं रवेर्यद्वद्भासकत्वं विनश्वरम् ५३
अपि स्वाभाविकं तत्तु तस्य नैव विनश्यति
स्वाभाविकं तु साक्षित्वमात्मनः सार्वकालिकम् ५४
अपि साक्ष्यमपेक्ष्यैव खलु तद् व्यपदिश्यते
भासक्तत्वं तु सूर्यस्य भास्याभिव्यक्त्यपेक्षया ५५
स्वाभाविकं यथा लोके मनुष्यैर्व्यपदिश्यते
स्वाभाविकं तु साक्षित्वं साक्ष्याभावे विनैव तु ५६
व्यपदेश्यं स्वरूपेण केवलं तिष्ठति ध्रुवम्
भासकत्वं स्वतः सिद्धं भास्याभावे विनैव तु ५७
व्यपदेशं यथार्कस्य स्वरूपेणैव तिष्ठति
स्वभावादेव यः साक्षी स एव परमः शिवः ५८
तदैक्यं हि परा मुक्तिर्जीवसंज्ञस्य देहिनः
स्वत एवं त्वभिन्नस्य तदैक्यं परमात्मनः ५९
तदैक्याज्ञाननाशेन स्वत एव प्रकाशते
जीवब्रह्मैक्यविज्ञानाद् यदज्ञानं विनश्यति ६०
तन्न भिन्नं न चाभिन्नं नापि सत्सद् विलक्षणम्
महदादिजगच्छून्यं पर्यन्तमखिलं जडम् ६१
ब्रह्मात्मैक्यापरिज्ञानमहामायाविजृम्भणम्
संसारहेतुभूतस्य मूलाज्ञानस्य बाधकम् ६२
ब्रह्मात्मैक्यपरिज्ञानं वेदादेव विजायते
भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ६२
क्षीयन्ते सर्वकर्माणि ब्रह्मज्ञानोदये सति
ब्रह्मज्ञानेन विध्वस्तमपि सर्वमिदं जगत् ६३
भाति चाभासरूपेण प्रारब्धान्तमसंशयः
यानि कर्माणि संसारफलहेतूनि सत्तम ६४

तानि तत्साधनत्वेन देहमुत्पादयन्ति वै
विद्यारम्भककर्माणि शमादीन्यखिलानि तु ६५
विनैव साधनं देहे विद्यामुत्पादयन्ति वै
अन्यैः सम्पादिते देहे विद्याहेतूनि यानि तु ६६
तानि तान्यनुसृत्यैव विद्यामुत्पादयन्ति वै
प्रारब्धफलपर्यन्तं प्रपञ्चस्यावभासनम् ६७
प्रदग्धुं नैव सक्ता सा विद्या वेदान्तवाक्यजा
देहहेतूनि कर्माणि स्वातन्त्र्येणैव वेदने ६८
निःशेषदाहकाकारं प्रतिबध्नन्ति सत्तम
विद्या स्वोदयमात्रेण संसारविनिवर्तिका ६९
परतत्त्वसमुत्पन्ना दहत्यखिलसत्यताम्
सत्यत्वे तु प्रनष्टेऽपि प्रतीत्यारम्भकाणि तु ७०
कर्माणि फलहेतूनि सफलं भोजयन्ति हि
सत्यत्वस्य च दग्धत्वात् प्रतीत्याभोगसम्भवात् ७१
जीवन्मुक्त इति प्रोक्तः प्रारब्धान्तमनिन्दितः
जीवनमुक्तस्य पुण्यं वा पापं वा नैव विद्यते ७२
कर्तुरेव हि तत्सर्वं कर्तृता नात्मवेदिनः
कर्तृताहंकृतेरेव कर्ताहमिति भासनात् ७३
अहमः कर्तृरूपः स्यात् साक्ष्येवात्मा स्वयंप्रभः
सर्वदा साक्षिमात्रत्वमेव शुद्धात्मवस्तुनः ७४
इति ज्ञानवतः पूर्वमपि नैव हि कर्तृता
कर्तृताऽज्ञानवेलायां विभाति विद्ययैव तु ७५
बाधिता हि ततः कर्म नैवास्योत्तरकालजम्
शरीरारम्भकं कर्म योगिनो भोगिनोऽपि च ७६
विना फलोपभोगेन नैव नश्यत्यसंशयः
वर्तमानशरीरेण सम्पन्नं कर्म देहिनः ७७
इह वाऽमुत्र वा तस्य ददाति स्वफलं शुक
इहैव फलदं कर्म प्रारब्धं प्रतिबन्ध्य च ७८
फलं ददाति स्वप्ने वा जागृत्कालेऽथवानघ
निवृत्तप्रतिबन्धं च प्रारब्धं कर्म सत्तम ७९

निरुध्यं सफलं स्वप्ने ददाति स्थिरमुत्तमम्
निरुद्धांशसमो भोगा यदोद्भूतश्च जायते ८०
ददाति रुद्धं तेनैव सह कर्म ददाति वै
एवं निरुद्धभागे तु स्वप्ने जाग्रति वा फलम् ८१
आरब्धस्यानुगुणयेन भुङ्क्ते देही न संशयः
अत्युत्कटैरिहत्यैस्तु पुणयपापैः शरीरभृत् ८२
प्रारब्धं कर्म विच्छिद्य भुङ्क्ते तत्फलमेव हि
प्रारब्धशेषं विच्छिन्नं पुनर्देहान्तरेण तु ८३
युक्तो देही ततो भुङ्क्ते तल्लङ्घयति कः शुक
युक्तो देही ततो भुङ्क्ते तल्लङ्घयति कः शुक
अवश्यमेव भोक्तव्यं प्रारब्धस्य फलं जनैः ८४
देहेनानेन वान्येन युगपद्वा क्रमेण वा
अनेकदेहभोगस्य शुभस्याप्यशुभस्य च ८५
अनेकस्य फलस्यैव शुभकर्माणि कानिचित्
कारणानि भवन्त्येव तान्यनेकं तु विग्रहम् ८६
आरम्भन्ते क्रमेणैव तेषां नाशस्तु भोगतः
सञ्चितेषु समस्तेषु प्रबलं कर्म देहिनः ८७
भोगानारभते देहमपि तत्साधनं बुधः
दुर्घटं सकलं शक्तिर्माया माहेश्वरी जडा ८८
घटयेत्येव सन्देहो नास्ति सा तादृशी खलु
माया तस्याश्च कार्यं च सहते न निरूपणम् ८९
अनिरूपितरूपा हि माया माहेश्वरी खलु
व्यवहारदशायां तु श्रुत्युक्तेनैव वर्त्मना ९०
कर्मणा फलहेतुत्वं मयैव कथितं तव
प्रारब्धकर्मणि क्षीणे सति भोगेन विद्यया ९१
मायालेशो निवर्तेत निवृत्तप्रतिबन्धया
स्वयमेकापि सा माया बह्वाकारा विचक्षणा ९२
जगद्विवर्तते तस्या हेतुरेकः प्रकीर्तितः
आकारो वस्तुसत्यत्वप्रतिभासस्य कारणम् ९३
जगतोऽर्थक्रियाहेतुरपरः पणिडतोत्तम

परतत्त्वापरोक्षस्य कश्चिद् वै प्रतिबन्धकः ९४
कश्चिदात्मस्वरूपस्य साक्षादाच्छादकः शुक
जगत्प्रतीतिमात्रस्य हेतुः कश्चित् तपोधन ९५
आकारा अपरा सूक्ष्मा स्थूलाश्च बहवः खलु
आकारास्ते मया वक्तुं न शक्याः कल्पकोटिभिः ९६
मायाकार्यानुगुण्येन कल्प्या एव हि केवलम्
प्रारब्धकर्मणि क्षीणे मायाभेदोऽपि सुव्रत ९७
जगत्प्रतीतिमात्रस्य हेतुभूतः प्रणश्यति
विश्वमायानिवृत्तिस्तु मुक्तिः परतरा मता ९८
विद्ययैव हि सा सिध्येत् विद्यावेदान्तवाक्यजा
वेदान्तवाक्यतो विद्या मुमुक्षोरेव जायते ९९
मुमुक्षुत्वं तु मर्त्यानां मन्दं मन्दतरं दुधः
तीव्रं तीव्रतरं चैव तथा चैवोत्तरोत्तरम् १००
मुमुक्षुत्वस्य वैशिष्ट्यं मया वक्तुं न शक्यते
विद्या साधनपौष्कल्ये मुमुक्षुत्वे महत्तरे १०१
सा तु साक्षात् परा विद्या प्रसादादेव जायते
देवतानां प्रसादेन त्रिमूर्तीनां प्रसादतः १०२
वेदानां च प्रसादेन स्वगुरोश्च प्रसादतः
साक्षात् परतरस्यैव शिवस्य परमात्मनः १०३
साम्बमूर्तिधरस्यैव प्रसादेन विशेषतः
चिच्छक्तेस्तु प्रसादेन स्वस्यैव प्रत्यगात्मनः १०४
स्वविलक्षणशून्यस्य स्वयंभातस्य साक्षिणः
आविर्भावतिरोभावरहितस्याक्रियस्य च १०५
अहमर्थस्य चित्सत्यसुखस्यैव प्रसादतः
परा विद्या विजाता चेद् विद्वानेव परं पदम् १०६
स्वयं भवति कल्याणं विद्वत्तामपहाय हि
स्वप्नदृक् स्वप्नमुक्तित्वात् स्वप्नबोधेन केवलम् १०७
स्वयं भवति हे विप्र यथा तद्वत् परात्मवित्
स्वात्मनोऽन्यतया भातं समस्तं स्वपनोपमम् १०८
स्वात्ममात्रतया बुद्ध्या स्वयमेवावावशिष्यति

एवमुक्त्वा मुनिः श्रीमच्छक्तिपुत्रः पराशरः
सर्ववेदान्ततत्त्वानामाकरः करुणानिधिः
स्वस्वरूपमहानन्दप्रकाशपरमाम्बुधौ
प्रतीचि सच्चिदानन्दे केवले परमेऽद्वये
निमग्नो निभृतस्तूष्णीमास्ते केवलमास्तिकः १०९
मुनेः पराशरस्यास्य स्वानुभूतिप्रदायिनी
पार्वती परमा देवी तत्रैवाविरभूत्स्वयम् ११०
स्वानुभूतिपरानन्दविलीनकरणत्वतः
नापश्यत् परमामेनां भवानीं स पराशरः १११
पराशरं परानन्दपरमानुभवप्रियम्
विलोक्य शुकमाह्लादादिदं वचनमब्रवीत् ११२
पार्वत्युवाच
मुनिनानेन कल्याण यदुक्तं परमादरात्
सत्यमेव तु तत्सर्वं सत्यमुक्तं मयैव तु ११३
पराशरसुतस्यैव व्यासस्याक्लिष्टकर्मणः
पुत्रः खलु शुक त्वं हि किं न सिध्यति तेऽनघ ११४
मत्प्रसादेन वेदान्तवचनोत्पन्नवेदनम्
करामलकवल्लब्धं भवता भाग्यगौरवात् ११५
नास्ति लोकत्रये किञ्चित् तवालभ्यमतः परम्
चित्तपारिप्लवं त्यक्त्वा पश्य स्वात्मानमव्ययम् ११६
स्वात्मतत्त्वानुसन्धानादनेकभवबन्धनात्
विमुक्ता मुनयः पूर्वे तादृशो हि भवानपि ११७
दुर्लभं हि परिज्ञानं नराणामविवेकिनाम्
सद्यो मुक्तिकरं साक्षात् प्रसादेन विना मम ११८
मत्प्रसादस्य सिध्यर्थं पूजयेन्मामतन्द्रितः
आदरेण यथाशक्ति हृदयाम्भोजमध्यमे ११९
स्ववाचि ब्रह्मरन्ध्रे वा मूलाधारेऽथवादरात्
भ्रुवोर्मध्येऽथवा नित्यं कुर्यादेव ममार्चनम् १२०
मम निष्कलरूपं वा वर्णसङ्क्लृप्तविग्रहम्
पादहस्तादिसंयुक्तं सर्वाभरणभूषितम् १२१

अथ विप्रात्मकं वापि विग्रहं मम पूजयेत्
लोहपाषाणजन्यं वा मन्त्रतो नित्यमेव च १२२
गुरूक्तेनैव मार्गेण पूजयेद् भक्तिपूर्वकम्
किं बहूक्त्यार्चयेन्मां तु मनुजः सर्वसिद्धये १२३
इत्युक्त्वा पार्वती देवी शक्तिपुत्रं शुकं च सा
अनुगृह्य महादेवी तत्रैवान्तरधीयत १२५
देव्यामन्तर्हितायां तु गलितः स्वानुभूतितः
पराशरो मुनिः श्रीमानालोक्य शुकमास्तिकम् १२५
भवानीसहितं देवं भवरोगविनाशनम्
लम्बोदरं गणाध्यक्षं शक्तिपाणिं च षण्मुखम् १२६
नन्दीशं शिवभक्तांश्च प्रणम्य भुवि दण्डवत्
सादरं लोकरक्षार्थमिदं वचनमब्रवीत् १२७
महादेवः परं तत्त्वं विद्या वेदान्तवाक्यजा
विद्याङ्गेषु समस्तेषु वरिष्ठं भस्मधारणम् १२८
गुरुः संसारिणां नृणां संसारोदधितारकः ।
श्रद्धा धर्मस्य मोक्षस्य कारणं सकलस्य च १२९
इतः परं न वक्तव्यमणुमात्रमपि द्विज
श्रोतव्यं च तथा नास्ति शुक सत्यं न संशयः १३०
महादेवप्रसादेन पाराशरसमाह्वयम्
मया पराशरेणैव पुराणमिदमीरितम् १३१
व्यासपुत्रः शुकः श्रुत्वा पाराशर्यं पराशरात्
पुराणं दण्डवद्भूमौ प्रणाममकरोद् गुरोः १३२
नमो रुद्राय देवाय स्वतन्त्रायाखिलात्मने
प्रधानपुरुषेशाय जगत्सर्गादिहेतवे १३३
या विभाति सदा साक्षि स्वरूपेण स्वभावतः
तां नमाम्यादरेणैव शिवामानन्ददायिनीम् १३४
अष्टोत्तरसहस्रेण श्लोकेनैव विनिर्मितम्
इदमष्टादशाध्यायैः निशोऽत्रैव च दर्शितः १३५

इत्युपपुराणे पाराशरे अष्टादशोऽध्यायः १८

इति पाराशरोपपुराणं समाप्तम्

Reference:
Kapiladeva Tripāṭhi, ed., *Pārāśaropapurāṇaṁ, Samīkṣātmakaṁ Saṁpādanaṁ* (Varanasi: Sampurnanand Sanskrit University Press, 1990).